इत्थं शिष्यवचनं श्रुत्वा श्रीगुरुस्तमाश्वासयति शृण्वन्निति पान्थान्योक्त्या—

**शृण्वन्पुरः परुषगर्जितमस्य हन्त**
**रे पान्थ विह्वलमना न मनागपि स्याः।**
**विश्वार्तिवारणसमर्पितजीवनोऽयं**
**नाकर्णितः किमु सखे भवताम्बुवाहः॥ ३५॥**

रे इति नीचसंबोधने। तेन निरुक्ताक्षेपस्त्वयानुचित एव विरचित इति सूचितम्। पान्थ पथिक। पक्षे हितजिज्ञासुत्वेन भो सन्मार्गगामिन्नित्यर्थः। त्वमस्य प्रकृतस्य मेघस्य। पक्षे गुरोर्मम। पुरोऽग्रभागे। परुषेति। परुषं भयंकरम्। पक्षे त्वय्यौदास्यमिव विधायान्यं प्रत्युक्तत्वेन दुःसहं च तद्गर्जितं स्तनितम्। पक्ष उच्चैर्भाषितं शृण्वन्सन्मनागपि ईषदपि विह्वलमना विकलान्तःकरणो न स्या मा भवेत्यन्वयः। तत्र हेतुः। विश्वेति। हे सखे, भवता। एतेन सांत्वनं व्यज्यते। विश्वेति। विश्वस्य सर्वस्यार्तिः पीडा तस्या वारणं दूरीकरणं तदर्थं समर्पितं जीवनमुदकम्। पक्षे प्राणधारणं येन स तथेत्यर्थः। परोपकारैकतत्पर इति यावत्। एतादृशोऽयं प्रत्यक्षोऽम्बुवाहो वारिदः। पक्षेऽम्बुशब्दवाच्यममृतपदश्लिष्टं कैवल्यं वहति ब्रह्मात्मबोधपर्यन्तोपदेशेन निर्वहतीति तथा श्रीगुरुरित्यर्थः। नाकर्णितः किमु प्रथितमहिमत्वान्न श्रुतः किम्। अपि तु श्रुत एवेति योजना। तस्मादयुक्त एवायं त्वदाक्षेप इति भावः। इह संबोध्यो नायकः। शान्तो रसः। श्लेषः काव्यलिङ्गं चालंकारः। वसन्ततिलका वृत्तम्। तल्लक्षणं प्रागेवोक्तम्॥

एवमाश्वास्य चतुर्विधान्यतमपुमर्थार्थिनापि दुःसङ्गस्त्याज्य एवेति रहस्यं सूचयति चन्दनान्योक्त्या—

**सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं तु लोकोत्तरं**
**कीर्तिः किं च दिगङ्गनाङ्गणगता किं त्वेतदेकं शृणु।**
**सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरा-**
**नुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली॥३६॥**

सौरभ्यमिति। हे श्रीखण्ड श्रीः खण्डेषु यस्य तत्संबुद्धौ। चन्दनस्य हि यादृशी काष्ठखण्डदशावच्छेदेन सौरभ्यशोभोपलभ्यते न तादृग्द्रुमादिदशावच्छेदेनेति सुप्रसिद्धमेव। अतो युक्तैवोक्तव्युत्पत्तिः। अयि चन्दनेत्यर्थः। तव सौरभ्यं सौगन्ध्यम्। भुवनेति। लोकत्रयेऽपि विदितं सर्वमान्यतया प्रख्यातम्। वर्तत इति यावत्। तथा शैत्यं तु संतापोपशामकत्वं तु लोकोत्तरमलौकिकमेव। अस्तीत्यर्थः। किंच तव कीर्तिर्दाहादावपि परिमलपौष्कल्यख्यातिः। दिगिति। प्राच्यादिचपलविलोचनाजिरसंचारिणीत्यर्थः। भवतीति शेषः। किं तत इति चेत्तदाह—किं त्वित्यादि। तदेव स्फुटयति—इयं प्रत्यक्षा द्विजिह्वावलिः सर्पराजिस्तव कोटरेष्वनायाससंपन्नत्वात्काष्ठबिलेष्वित्यर्थः। गरलज्वालां गरलानि वान्तविषाणि तेषां

स्वनिष्ठसूक्ष्माग्निना सह त्वत्काष्ठसंयोगाज्ज्वालार्चिस्ताम् । यद्वा तान्येव ज्वालेव दाहकत्वाज्ज्वाला ताम् । यद्वा तानि ज्वालेव ज्वाला तामित्यर्थः । उज्झन्ती उद्भावयन्ती सती ते सर्वानेव तव संपूर्णान्सुन्दरानेव रम्यानेव निरुक्तसौरभ्यादीन्गुणान् । धर्मानित्यर्थः । निगिरति खलु भक्षयत्येवेति योजना । तस्मादेतस्याः परिग्रहस्तव परमनाशहेतुत्वादनुचित एवेति भावः । अत्र सुन्दरपदेन गुणेष्ववश्यं संरक्षणीयत्वं द्योत्यते । इह संबोध्यनायकपक्षेऽपि कोटरपदमात्रे गौणीं वृत्तिमाश्रित्यान्तःपुरादिगृहैकान्तदेशविशेषार्थकत्वमुररीकृत्यार्थान्वयो विधेयः । तद्यथा—भो देवदत्त, ते सौरभ्यं सुरभेः 'सुगन्धे च मनोज्ञे च वाच्यवत्सुरभिः स्मृतः' इति विश्वान्मनोज्ञस्य भावः सौरभ्यम् । रम्यत्वमित्यर्थः । शैत्यं 'शितशीतौ कृशे तीक्ष्णे' इति हैमात्तैक्ष्ण्यम् । तेजस्वित्वमिति यावत् । द्विजिह्वेति । 'द्विजिह्वौ सर्पसूचकौ' इत्यमरात्परच्छिद्रसूचकपङ्क्तिरित्यर्थः । गरलेति । गरलमिव दुरुपदेशजातं मारकत्वाद्गरलं तेन ज्वालेव कोपाग्निजन्याया परध्वंसनेच्छा तामित्यर्थः । शेषं तूक्तार्थमेव । तस्मात्पिशुनवचो नैवादरणीयमित्याशयः । अत्रोपदेश्यो नायकः । करुणो रसः । श्लेषलुप्तोपमे अप्यलंकारौ । शार्दूलविक्रीडितं वृत्तम् ॥

एवं श्रीगुरुवाक्यं श्रुत्वा दुर्जनवचनश्रोतरि स्वस्मिन्नौदासीन्यमिवालक्ष्य तस्य सर्वत्र निरपेक्षसर्वोपकारित्वं सूचयन्नात्मनि तत्कारुण्यमुत्पादयति । नापेक्षेति मेघान्योक्त्या—

**नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च संगतिः ।**
**तथापि हरते तापं लोकानामुन्नतो घनः ॥ ३७ ॥**

हे गुरो, यद्यप्यस्यापेक्षा नास्ति । तथा दाक्षिण्यं समुद्रोदकमानीय दातृत्वात्स्वतः सामर्थ्यमपि नास्तीत्यर्थः । शेषं स्फुटमेव । अत्र नापेक्षेत्यादिनञ्चतुष्टयेन क्रमाद्गुरौ लोभौद्धत्यरागसङ्गव्युदासः सूचितः । तेनाहं नैवोपेक्ष्य इति रहस्यम् । इह पूज्यः कृपालुश्च नायकः । उक्त एव रसः । परिकरोऽप्यलंकारः ॥

अथैवं शिष्यवाक्यमाकर्ण्य यद्येवं तव श्रद्धा चेत्तर्ह्यनुपम एवासीति कमलान्योक्त्या तदुत्पत्तिस्थितिसंपत्तिगुणपङ्क्तिस्तवनतो व्यनक्ति—

**समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं**
**निवासः पद्मायाः सुरहृदयहारी परिमलः ।**
**गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव**
**द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥ ३८ ॥**

समुत्पत्तिरिति । हे अम्बुज भो कमल, तव समुत्पत्तिः प्रादुर्भावः स्वच्छे निर्मले सरसि मानसादौ सरोवरे । न तु पल्वलेऽस्तीत्यर्थः । एवं निवसनमपि वसतिरपि हरिहस्ते विष्णुपाणौ । तवेत्यस्तीति चाद्यन्तयोरनुबन्धनीयम् । किंच त्वं पद्मायाः लक्ष्म्या निवासो वसतिस्थानम् । असीति शेषः । तथा तव परिमलः सुगन्धोऽपि । सुरेति । देवमनोहर इत्यर्थः । भवतीत्यध्याहारः । एतेन गोदुग्धादेरुत्तमस्थानजन्यत्वेऽपि ताम्रपात्रादिस्थित्या तस्य पुनस्तदि-

तरपात्रादिगत्वे शर्करादियोग्यसंमेलनाभावेन लवणाद्ययोग्यसंमेलनेन वा तथा शोधितत्वा-ग्न्यादिसंस्कृततैलादिसुवासितत्वाभावेन हिङ्ग्वादि दुर्गन्धित्वादिना वा त्याज्यत्वमिवा-स्यापि निन्द्यजत्वादिना हेयत्वं व्युदस्तम् । तर्हि किमेतावन्त एव मयि गुणाः सन्ति ने-त्याह—गुणैरिति । अन्यैरपि निरुक्तेतरैः स्वीयसुन्दरीस्मितसदनसादृश्याद्यैरपीत्यर्थः । ल-लितस्य । रम्यस्येति यावत् । एतादृशस्य तव यदि । द्विजेति । पक्षिश्रेष्ठे । पक्षे त्रैवर्णिकशि-रोमणौ । हंसे राजहंसे । पक्षे परमहंसे । कस्मिंश्चिद्ब्रह्मनिष्ठ इत्यर्थः । रतिः प्रीतिरस्ति । तर्हीयमतीवानुपमैवोन्नतिरुत्कटता भवतीत्यन्वयः । तस्मादेवमेव सार्वदिकी श्रद्धा वर्धनीयेति तत्त्वम् । अत्र द्विजेत्यादरणीयां शब्दब्रह्मनिष्णातत्वादिबहिःसामग्री हंसेत्यन्तःसामग्री च सूचिता । इह बुभुत्सुर्नायकः । शान्तो रसः । काव्यलिङ्गादिरप्यलंकारः । शिखरिणी वृत्तम् ॥

ननु तर्हि किं सर्वपालकेन राज्ञा मया नीचजनोज्जीवनं नैव विधेयमिति चेत्सर्वजीवनं त्वया संपादनीयमेव परंतु तत्तद्योग्यतातारतम्यं विवेकेनैव न त्वन्यथेति क्षीराब्ध्यन्योक्ति-तो ध्वनयति—

**साकं ग्रावगणैर्लुठन्ति मणयस्तीरेऽर्कबिम्बोपमा**
**नीरे नीरचरैः समं स भगवान्निद्राति नारायणः ।**
**एवं वीक्ष्य तवाविवेकमपि च प्रौढिं परामुन्नतेः**
**किं निन्दान्यथवा स्तवानि कथय क्षीरार्णव त्वामहम् ३९**

साकमिति । ग्रावेति । 'पाषाणप्रस्तरग्रावोपलाश्मानः' इत्यमरात्पाषाणगणैः साकं सा-र्धम् । नीरे नीरवत्सर्वतः परिपूर्णे क्षीर एव । ननु फलवादिवत्क्वचित्कदाचित्केनचिदु-पलभ्यमान इति यावत् । एतेन क्षीरार्णवे नीरासंभवान्नीरपदप्रयोगानौचित्यं परास्तम् । एवं नीरचरपदेऽपि तेषामतितुच्छत्वबोधनार्थमेव नरिपदम् । तेन वक्ष्यमाणाविवेकपरि-पोषोऽपि ध्वन्यते । नीरचरैः । मकरादिभिर्जलचरैरित्यर्थः । स भगवानिति पदाभ्यां श्रुति-प्रसिद्धत्वं सर्वेश्वरत्वं च ततोऽतिपूज्यत्वं व्यज्यते । हे क्षीरार्णव, त्वामहं किं निन्दान्य-थवा स्तवानीति त्वमेव कथयेति संबन्धः । अत्राविवेकी नायकः । संदेहोऽप्यलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

एवं निन्दापदं श्रुत्वा कुपितं तं प्रति स्वयं निःस्पृहत्वेन क्षीरार्णवान्योक्त्या निन्दामेव स्फुटयति—

**किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते ।**
**सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥४०॥**

किं खल्विति । अभ्रायितेन अभ्रवन्मेघवदाचरितेनेत्यर्थः । महत्त्वनीलत्वादिनाभ्रसाम्यं बोध्यम् । तत्र हेतुः—सलिलमपीति । एतेन तस्यातितुच्छत्वाद्दानयोग्यत्वमावेद्यते । ननु ग-ङ्गादीनामपि किं जलं स्वयमेव जनवदनं प्रयातीत्यत्राह—तृषितानामिति । तस्मात्तृषितैरपि

त्वज्जलं क्षारत्वात्पातुं नैव शक्यत इत्याशयः। पक्षे सदुपदेष्टरि कुपितत्वेन कृतघ्नस्य तव जलमपि तृषितैरपि जनैरप्राश्यमेव क्व पुनरन्नमिति ध्वन्यते। अत्र शठो नायकः। लुप्तोपमाप्यलंकारः। करुणो रसः॥

तत्रापि संपदादिमदेनाप्रणमन्तं तं प्रति तस्य कालग्रस्तत्वेन विनाशित्वं सूचयन्कासारान्योक्त्या भियं ध्वनयति—

**इयत्यां संपत्तावपि च सलिलानां त्वमधुना**
**न तृष्णामार्तानां हरसि यदि कासार सहसा।**
**निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरा-**
**न्कृशीभूतः केषामहह परिहर्तासि खलु ताम्॥ ४१॥**

इयत्यामिति। पूर्वं क्षीरार्णवत्वेन संबोधनेऽपि कुपितत्वात्क्षारार्णवत्वेन निन्दा तत्रापि स्तब्धत्वादधुना पल्वलत्वेनासावुचितैव। इयत्यां प्रत्यक्षतयातिविपुलायामित्यर्थः। सलिलानां जलानां संपत्तौ लक्ष्म्यां सत्यामिति योजना। हे कासार 'कासारः सरसी सरः' इत्यमराद्धोः सरोवर, त्वमधुना शरत्काल आर्तानां तृषाक्रान्तानां जनानां तृष्णां तृषम्। पक्षे धनाद्याशां यदि सहसा झटिति न हरसीति संबन्धः। तर्हि निदाघे 'निदाघ उष्णोपगमः' इत्यमराद्ग्रीष्म इत्यर्थः। चण्डांशौ चण्डास्तीक्ष्णा अंशवः किरणा यस्य तस्मिंस्तिग्मरश्मौ। सूर्य इति यावत्। परितो न त्वेकदेशे। अङ्गारेति। अङ्गारवदतिदाहकत्वात्क्रूरतरातपविशेषा एवाङ्गारास्तेषां निकरान्समूहान्किरति वर्षति सतीत्यर्थः। अत एव कृशीभूतस्त्वं केषां तां तृष्णां परिहर्तासीत्यन्वयः। तदानीं त्वयि तृष्णोपशामकत्वस्य सुतरामसंभव इति भावः। तस्मात्त्वयैतादृशं विवेकं विधाय तादृग्दशातः प्रागेवार्तपरिपालनतत्परेण भाव्यमिति हृदयम्। अत्राप्युक्ता एव नायकादयः॥

तत्रापि दृप्तत्वादविनयित्व एव सति तत्कालं तादृक्संवादश्रवणेन राज्ञि मूढत्वमवधार्य तद्दत्तधनाद्यपि परित्यज्य गतेष्वर्थिषु स तदादानपरः पुनः किंचित्सामपूर्वकं समुद्रान्योक्तित एवोपदिश्यते—

**अयि रोषमुरीकरोषि नो चे-**
**त्किमपि त्वां प्रति वारिधे वदामः।**
**जलदेन तवार्थिना विमुक्ता-**
**न्यपि तोयानि महान्न हा जहासि॥ ४२॥**

अयीति। अयि वारिधे। एतेन तत्कोपशमनार्थित्वं सूचितम्। नो चेत्कुपिते ह्युपदेशवैयर्थ्यमेव स्यात्। त्वं महानपि संस्तोयान्यपि। हेति खेदे। न जहासि न त्यजसीति संबन्धः। तस्मादिदं महतस्तेऽनुचितमेवेत्याकूतम्। मालभारणी वृत्तम्। 'ससजाः प्रथमे पदे गुरू चेत्सभरा येन च मालभारणी स्यात्' इति वृत्तरत्नाकरोक्तेः। वीरो रसः॥

एवं तदुक्तिमाकर्ण्य निरुक्तसमुद्रजलदन्यायेनैव मया यदेतैरर्थिभिः परित्यक्तं धनं संगृह्यते तत्कालान्तरे तावदेतेभ्य एव दानार्थं न तु स्वोपभोगार्थमित्यादि पाण्डित्यं सद्गुरुनिकटेऽपि प्रकटयन्तं तमेव राजसुतं कश्चित्तटस्थः प्रावृण्णद्यन्योक्त्या विनयमुपदिशति—

**न वारयामो भवतीं विशन्तीं वर्षानदि स्रोतसि जह्नुजायाः।**
**न युक्तमेतत्तु पुरो यदस्यास्तरङ्गभङ्गान्प्रकटीकरोषि ॥ ४३ ॥**

न वारयाम इति। अत्र वर्षानदीत्वेन संबोधनं तु स्त्रीप्रकृतिवन्मूर्खत्वं क्षणिकैश्वर्यवत्त्वं चापल्यबाहुल्यं गाम्भीर्यवैधुर्यं च सूचयितुम्। हे वर्षानदि प्रावृट्कालमात्रतरङ्गिणि, भवतीं त्वां जह्नुजाया भागीरथ्याः। एतेन महामहिमत्वं द्योत्यते। स्रोतसि 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरात्प्रवाह इत्यर्थः। विशन्तीं प्रविशन्तीं तदैक्यसंपादनं कुर्वन्तीं न वारयामो नैव प्रतिरोधयाम इति यावत्। वयमिति शेषः। एतेनामानित्वौदासीन्ये ध्वन्येते। तर्हि किं वदसीत्यत्राह—नेत्युत्तरार्धेन। एतत्तु न युक्तं नैवोचितमित्यर्थः। तत्किमित्यत आह—पुर इत्यादि शेषेण। यदस्या जाह्नव्याः पुरोऽग्रे। तरङ्गेत्यादि यथाश्रुतमेव योज्यम्। यद्यपि 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमराद्भङ्गपदं द्विरुक्तमिवाभाति, तथापि 'यः सर्वज्ञः सर्ववित्' इत्यादिवत्सामान्यविशेषभावं परिकल्प्य व्यवस्थापनीयम्। यद्वा अस्या इति षष्ठी तरङ्गेत्यनेन संबन्ध्यभङ्गपदेन ध्वंसा एव ग्राह्याः। पुरःपदे त्वसौ सिद्धैवेति न दोषः। तस्मात्त्वया विनयपूर्वकमेव गुर्वैक्यं संवादेनासादनीयमित्याशयः। इत आरभ्य पद्यचतुष्टये शठ एव नायकः। उपजातिर्वृत्तम् ॥

अथ तन्माहात्म्यवर्णनेन तत्सेवनमपि कर्तव्यतया कमलान्योक्त्या व्यनक्ति—

**पौलोमीपतिकानने विलसतां गीर्वाणभूमीरुहां**
**येनाघ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरैः।**
**तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति**
**त्वं चेदञ्चसि लोभमम्बुज तदा किं त्वां प्रति ब्रूमहे ॥४४॥**

पौलोमीति। हे अम्बुज। एतेन विचारशूरताराहित्यं द्योत्यते। येन। पौलोमीति। 'पुलोमजा शची' इत्यमरादिन्द्राणीरमणाराम इत्यर्थः। विलसतां भ्राजताम्। गीर्वाणेति। सुरतरूणाम्। आघ्रातेति। पूर्वमाघ्रातान्यात्तगन्धानि पश्चात्समुज्झितानीति तथा। आस्वाद्य त्यक्तानीति यावत्। एतादृशानि कुसुमानि। निर्जरैर्देवैरप्याजघ्रिर आस्वादितानीत्यर्थः। अद्य विधिवशाद्दैववशात्तस्मिन्मधुव्रते भ्रमरे। अत्र व्रतपदमवश्यंपरिपाल्यतां ध्वनयति। माध्वीकं मकरन्दम्। आकाङ्क्षति अपेक्षमाणे सतीत्यर्थः। त्वं लोभमञ्चसि स्वीकुरुषे चेत्तदा त्वां प्रति किं ब्रूमह इत्यन्वयः। तस्मादीदृक्पात्रे धनलोभो नैव कर्तव्यः। किं तु यथेच्छं समर्पणीयमेवेति भावः॥

ननु भवत्वेवं पूज्यतमत्वमस्य, तथापि स्वपाण्डित्यप्रकटने को दोषः। प्रत्युत शिष्यस्य मम पुत्रतौल्यात् 'सर्वत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्' इति न्यायात्संतोष एव स्यादित्याशङ्क्य कादाचित्कक्तघ्नताभानापत्तेस्तदपि त्याज्यमेवेति स एव राजहंसान्योक्त्या व्यनक्ति—

**भुक्ता मृणालपटली भवता निपीता-**
**न्यम्बूनि यत्र नलिनानि निषेवितानि ।**
**रे राजहंस वद तस्य सरोवरस्य**
**कृत्येन केन भवितासि कृतोपकारः ॥ ४५ ॥**

भुक्तेति । रे इति नीचसंबोधनम् । निरुक्ताशङ्काशालित्वाद्युक्तमेव । न च विवेकाभावादेवेयमाशङ्का न तु प्रमादादिति वाच्यमित्याह—राजेति । एवं च राजहंसे यथा क्षीरनीरविवेककुशलत्वमेवमेव त्वय्यपि शास्त्राभ्यासेन सदसद्विचारचतुरत्वं वर्तत एव तथाप्युक्तपाण्डित्यप्रकटनेच्छा यदि तदा प्रमादित्वमेवेति माणवकैरपि निर्णेयमिति द्योत्यते । भवता यत्र । मृणालेति । कमलतन्तुसंहतिरित्यर्थः । भुक्ता आस्वादिता । तथाम्बून्युदकानि निपीतानि। तथा नलिनानि पद्मानि निषेवितान्युपवेशनादिभिरुपभुक्तानीति यावत् । पक्षे मृणालवन्मृदुतराणि सुहृत्संमितपुराणोपदेशवाक्यानि, तथाम्बुवन्मृदुतमानि कान्तासंमितकाव्योपदेशवाक्यानि, तथा नलिनवन्मृदूनि राजसंमितवेदोपदेशवाक्यानि च सतात्पर्यं श्रुतानीत्याशयः । अत्र पाठक्रमादर्थक्रमस्य बलीयस्त्वन्यायेन वेदवाक्यानां प्राथमिकत्वं बोध्यम् । तस्य सरोवरस्य त्वं केन कृत्येन । व्यापारविशेषेणेत्यर्थः । कृतोपकारो रचितप्रत्युपकारो भवितासीति वदेत्यन्वयः। तस्माद्गुरुप्रत्युपकारो नैव कर्तुं शक्यः । किं तु तत्सेवनमात्रं 'यावज्जीवं त्रयः सेव्या वेदान्तो गुरुरीश्वरः । पूर्वं ज्ञानाप्तये पश्चात्कृतघ्नत्वनिवृत्तये ॥' इति वचनात्कर्तव्यम् । न तु तत्र स्वपाण्डित्यप्रकटनमपीत्याकूतम् ॥

एवमनधिकारितया सदुपदेष्टर्यपि तटस्थजन एव रुष्टः स राजकुमारस्तमेव तिरस्करोति—प्रारम्भ इति भृङ्गान्योक्त्या ।

**प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-**
**पुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् ।**
**तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामञ्चति**
**त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥ ४६ ॥**

हे चञ्चरीक भ्रमर । कुसुमेति । वसन्तस्य प्रारम्भे। यस्य । उल्लसदिति । विकसद्वल्लरीविसर इत्यर्थः । त्वम् । मञ्जुलेति । मनोज्ञगुञ्जारवजातानीति यावत् । रचयन्कुर्वंस्तान्प्रसिद्धानुत्सवानातनोर्विस्तारितवानसीत्यर्थः । अद्य तस्मिन् । रसालेति । आम्रवृक्ष इत्यर्थः । न चात्र शाखीत्यधिकं तस्य परिपुष्टद्यभिप्रायत्वात् । दैवात्कृशां पल्लववैकल्यवतीमित्यर्थः । दशामवस्थामञ्चति स्वीकुर्वति विषये त्वं विनयं प्रश्रयं मुञ्चसि त्यजसि चेत्तर्हि त्वत्त्वत्तः

सकाशादन्य इतरो नीचः कः। न कोऽपीति योजना। तस्मादेवमौद्धत्यं नैव त्वया विधेय-मित्याशयः॥

एवं निर्भर्त्सनमाकर्ण्य स तटस्थस्तावत्प्रहसन्निव तं राजकुमारं प्रति निरुक्तवाक्यं त्वया स्वकीयान्तःपुर एव वक्तुमुचितं न तु पण्डितमण्डल्यामिति कृष्णसारान्योक्त्या व्यनक्ति—

**एणीगणेषु गुरुगर्वनिमीलिताक्षः**
**किं कृष्णसार खलु खेलसि काननेऽस्मिन्।**
**सीमामिमां कलय भिन्नकरीन्द्रकुम्भ-**
**मुक्तामयीं हरिविहारवसुंधरायाः॥ ४७॥**

एणीति। हे कृष्णसार, त्वम्। गुर्विति। गुरुर्महान्स चासौ गर्वश्च तेन निमीलिते तादृशे अक्षिणी नेत्रे यस्य स तथा। परमाभिमाननिमीलितलोचनः सन्नित्यर्थः। अस्मिन्कानने-ऽरण्ये। 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः। एणीति। मृगीसमूहेष्वित्यर्थः। खलु निश्चितं किं खेलसि किमिति क्रीडसीति यावत्। किं तर्हि कार्यमित्यत आह—सीमा-मित्युत्तरार्धेन। इमाम्। भिन्नेति। भिन्ना विदारितास्ते च ते करीन्द्रकुम्भा गजराजकपोला-स्तेषां या मुक्ता मौक्तिकानि तैः प्रचुरा तथा। तामित्यर्थः। एतादृशीम्। हरीति। सिंह-विलासस्थल्या इति यावत्। सीमां मर्यादां कलयावलम्बयेति संबन्धः। तस्माद्विपश्चित्स-दसि त्वया नैवैवं शक्यं वक्तुमिति तत्त्वम्। एतदारभ्य पद्यपञ्चकान्तं वीरो रसः। धीरललितो नायकश्च॥

एवं तटस्थराजकुमारयोः स्वनिमित्तं विवादं श्रुत्वा पाण्डितवरस्तं नृपसुतं प्रति स्वासमा-नेषु रोषो नैवोचित इति सूचयति—जठरेति सिंहान्योक्तिभ्याम्।

**जठरज्वलनज्वलताप्यपगतशङ्कं समागतापि पुरः।**
**करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम्॥ ४८॥**

करिणां गजानां न तु मशकानामरिणा शत्रुणा एतादृशेन महावीरेण हरिणा सिंहेन। जठरेति। जठरस्योदरस्य ज्वलनो वह्निस्तेन ज्वलति संतप्यत इति तथा तेन। क्षुत्परि-तप्यता सतापीत्यर्थः। अपगतेति। अपगता निरस्ता शङ्का भीतिकल्पना यथा स्यात्तथा। पुरोऽग्रभागे न तु पश्चात्। समागतापि न त्वकस्मात्प्राप्ता। एतेन मौढ्यातिशयो व्यजते। एतादृशी हरिणाली मृगपङ्क्तिः कथं नु हन्यताम्। न कथमपि मार्यताम्, किं तु पाल्यता-मेवेति योजना। तस्मात्त्वयात्र तटस्थादौ शान्तिरेव कार्येति तात्पर्यम्॥

**येन भिन्नकरिकुम्भविस्खल-**
**न्मौक्तिकावलिभिरञ्चिता मही।**

अद्य तेन हरिणान्तिके कथं
कथ्यतां नु हरिणा पराक्रमः ॥ ४९ ॥

येनेति । भिन्नेति । भिन्ना विदारिताः । मही पृथ्वी । अञ्चिता पूजिता । तेन हरिणा सिंहेन । अद्य हरिणान्तिके मृगनिकटे पराक्रमः कथं नु कथ्यताम् । न कथमपि कथनीय इत्यर्थः । तस्मादसमैः सह नैव वक्तव्यमिति भावः । 'रो नराविह रथोद्धता लगौ' इत्युक्तेरिदं तद्वृत्तम् ॥

अथ तं तटस्थं प्रत्यपि स एव पण्डितवरस्तावन्मया निरुक्तरीत्योपशमितस्यास्य निकटे त्वया नैवेतः परं स्थातव्यमिति गजान्योक्तिभ्यां व्यनक्ति—

स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि ।
असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ ५० ॥

स्थितिमिति । मदेति । मदेनान्धे ईक्षणे नेत्रे यस्य स तथा । तत्संबुद्धौ । एतेनावस्थितिशीलत्वं ध्वन्यते । सखे । एवं चोपदेशार्हत्वं व्यज्यते । गजेति । रे करिकुलपते, त्वमिह जटिलायां वल्लीबाहुल्येन संजातजटायामेतादृश्यां वनभुव्यरण्यभूमौ क्षणमपि । एतेन भीत्यतिशयः सूच्यते । स्थितिं नो दध्या नैव कुर्वित्यन्वयः । तत्र हेतुः—असाविति । एतेन प्रत्यक्षत्वादविश्वासव्युदासः । कुम्भीति । गजविभ्रमेणेत्यर्थः । कुम्भिपदभ्रान्त्यर्हत्वं व्यनक्ति—खरेति । खराणि तीक्ष्णानि यानि नखराणि नखानि तैर्विद्राविता विदारिता महागुरुग्राव्णां महापाषाणानाम् । अत्र महत्वं स्थूलत्वम् । गुरुत्वं तु वज्रमणिवद्दुर्भेद्यत्वमेवेति न पौनरुक्त्यम् । अत्र 'महागिरि–' इत्येव पाठः प्रमाणिकः । ग्रामाः संघा येन स तथेति यावत् । अत्र खरपदं निरुक्तकार्यक्षमत्वसूचनार्थम् । एतादृशः । अत एव—हरीति । मृगराजराजः । गिरीति । कन्दर इत्यर्थः । स्वपिति निद्रातीति योजना । तस्मादिह तवावस्थानमनुचितमेवेति भावः । भ्रान्त्यलंकारः ॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो
गजराजपोत न कदापि संचरेः ।
यदि बुद्ध्यते हरिशिशुः स्तनंधयो
भविता करेणुपरिशेषिता मही ॥ ५१ ॥

गिरीति । हे गजेति । अयि करीन्द्रपुत्र, त्वम् । गुर्विति । गुरुर्महान्स चासौ गर्वश्च तेन गुम्फितो ग्रथितः । परमबलाभिनिवेशावेशित इत्यर्थः । एतादृशः । अत एव—गिरीति । गिरेः पर्वतस्य यानि गह्वराणि बिलानि तेष्वित्यर्थः । कदापि कस्मिंश्चित्कालेऽपि । एतेन

भयाधिक्यं व्यज्यते । न संचरेः संचारमपि नैव कुर्या इत्यन्वयः । कुत इत्यत्राह—यदी-त्युत्तरार्धेन । यदि स्तनंधयोऽप्यतिपोतोऽपि । हरीति । सिंहबालको बुध्यते जागर्ति चेत्तर्हि मही पृथ्व्यपि । करेण्विति । करेणव एव गज्य एव परिशेषिता मारणादवशेषिताः । शूराणां हि स्त्रीवधानौचित्यात्ता एवावस्थापिता यस्यां सा तथा । एतादृशी भविता भवि-ष्यतीति संबन्धः । तस्माद्वनान्तर एव त्वया गन्तव्यमिति हृदयम् । मञ्जुभाषिणीवृत्त-मिदम् । तदुक्तं वृत्तरत्नाकरे—'सजसा जगौ भवति मञ्जुभाषिणी' इति ॥

एवं स्वोत्कर्षसूचनपरितुष्टो राजपुत्रस्तं स्वगुरुं पण्डितमण्डलीमण्डनत्वेन बकुला-न्योक्त्या स्तौति—

**निसर्गादारामे तरुकुलसमारोपसुकृती**
**कृती मालाकारो बकुलमपि कुत्रापि निदधे ।**
**इदं को जानीते यदयमिह कोणान्तरगतो**
**जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥ ५२ ॥**

निसर्गादिति । निसर्गात्स्वभावात् । आराम उपवने । तर्विति । तरूणां वृक्षाणामाम्रा-दीनां यत्कुलं वृन्दं तस्य यः समारोपः सम्यगुत्तमफलपर्यवसायित्वेनारोपोऽवापस्तेन यत्सु-कृतं पुण्यं तदस्यास्तीति तथा । सद्वृक्षारोपणपुण्यवानित्यर्थः । एतादृशः । तत्रापि कृती कुशलः । एतेन तदारोपणस्थानविवेचनचातुर्यं सूचितम् । एतादृशः । मालेति । शिष्टं पूर्वा-र्धमेव बोधार्हमेव । अस्त्वेवं किं तत इयत आह—इदमित्युत्तरार्धेन । किं तदित्यत्राह—यदिति । कोणेति । कोणान्तरगतोऽपीत्यर्थः । एवं च प्रतिष्ठासामग्र्यभावः सूचितः । जगदिति । विश्वमण्डलमित्यतिशयोक्तिः । तेन लोकोत्तरसौष्ठवं व्यजते । कुसुमेति । कुसुमानां पुष्पाणां यो भरस्तस्य यत्सौरभ्यं सौगन्ध्यं तेन भरितं पूरितमित्यर्थः । एतादृशं कर्ता करिष्यतीति । तस्माद्यद्यपि मयायं ब्राह्मणसाधारण्येनैवादृतस्तथाप्यस्य सद्गु-रोरलौकिकमेव सामर्थ्यमित्यसौ माननीय एवेति भावः । अत्र ललितो नायकः । अद्भुतो रसः । असंभवोऽलंकारः ॥

अथोक्त एव तटस्थोऽपि संस्तुवन्राजकुमारनिन्दां ध्वनयति—यस्मिन्निति राघवान्योक्त्या ।

**यस्मिन्खेलति सर्वतः परिचलत्कल्लोलकोलाहलै-**
**र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिदन्तावलाः पेदिरे ।**
**सोऽयं तुङ्गतिमिंगिलाङ्गकवलीकारक्रियाकोविदः**
**क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥ ५३ ॥**

यस्मिन्खेलति क्रीडति सति । हरिदिति । 'दन्ती दन्तावलो हस्ती' इत्यमराद्दिग्गजा इत्यर्थः । हृदि मनसि । कल्लोलेति । महोर्मिनिनादैः । मन्थेति । मन्था समुद्रमथनदण्डीभूतो मन्दरः स चासावद्रिश्च तस्य यद्भ्रमणं परिवर्तनं तस्य यो भ्रमोऽवभासस्तमित्यर्थः । पेदिरे

प्रापुरिति यावत् । किं तावतेत्यत आह—सोऽयमित्युत्तरार्धेन । सोऽयं प्रत्यक्षः । तुङ्गेति । तुङ्गा महत्तरास्ते च ते तिमिंगिला महामत्स्याश्चेति तेषां यान्यङ्गानि तेषां यः कवलीकारो ग्रासीकरणं तत्र क्रियाकोविदो व्यापारेण कुशलः । न तु ज्ञानमात्रनिपुण इत्यर्थः । एवं च कवलीकारकोविद इत्येतावतैव सार्थक्ये क्रियापदानर्थक्यं परास्तम् । एतादृशः । अत एव— केलीति । केलिना वध्वादिभिः सह क्रीडया न तु तदपराधेन यः कलहः सङ्ग्रामस्तेन त्यक्तोऽर्णवः समुद्रो येन स तथा । एतादृशो राघवः । 'तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः' इति वचनान्निरुपमो मत्स्यविशेषः । कस्य सरसः क्रोडे । 'क्रोडः सूकरमातङ्गयोः क्रोडा क्रोडं च वक्षसि' इति विश्वाद्वक्षसि । मध्य इति यावत् । क्रीडतु विहरतु । न कस्यापि विहरत्विति संबन्धः । तस्मादेतादृशः किंचिल्लीलाकलहत्यक्तसार्वभौमाश्रयः पण्डितमण्डलीपूजनीयः श्रीगुरुरयं क्षुद्रस्य राजकुमारस्य तव निकटेऽवस्थातुं नैव योग्य इत्याशयः । 'तिमिंगिलादयश्चान्ये' इत्यमरः । अत्रोदात्तो नायकः । अद्भुत एव रसः । अक्रमातिशयोक्त्यलंकारः ॥

एवं तटस्थस्यातिगुणज्ञतामालक्ष्य स एव पण्डितः स्वगतमेवानेन राजकुमारेणास्य परिपालनमेव कर्तव्यं न तु तिरस्करणमिति द्योतयंल्लवङ्गलतिकान्योक्त्या वदति—

**लूनं मत्तगजैः कियत्कियदपि च्छिन्नं तुषारार्दितैः**
**शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम् ।**
**एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो**
**हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥ ५४ ॥**

लूनमिति । काननं वनं यद्यपि कियत्किंचिन्मत्तगजैर्लूनं छिन्नम् । तथा कियदपि तुषारार्दितैस्तुषारेण । 'तुषारस्तुहिनं हिमम्' इत्यमराद्धिमेनार्दिताः पीडितास्तैः । शीतव्याकुलितैर्लोकैरित्यर्थः । छिन्नं खण्डितम् । इन्धनार्थमित्याशयः । शिष्टमुर्वरितम् । ग्रीष्मेति । ग्रीष्मे निदाघे जातः, अत एव यो भीष्मो भूरितापकत्वाद्भयंकरः, एतादृशो यो भानुः सूर्यस्तस्य ये किरणास्तैर्मयूखैरित्यर्थः । भस्मीकृतं नीरसतापादनेन भस्मतां नीतमिवेति संबन्धः । तथाप्येषा प्रत्यक्षा कोणगता कोणमप्रसिद्धैकदेशं गतेवि तथा रहसि विद्यमानापीत्यर्थः । मुहुर्भूयः परिमलैः सुगन्धैर्दिशः ककुभ आमोदयन्ती सुरभयन्ती सत्यपि तत्रापि । लवङ्गेति । 'लवङ्गं देवकुसुमम्' इत्यमराद्देवपुष्पवल्लीत्यर्थः । न तु मालती लता । एतेनोष्णत्वसुरभित्वाभ्यां कस्तूर्यादिवत्परमादरणीयत्वं द्योतितम् । तत्रापि ललिता नवीना न तु जीर्णा । एवं चावश्यरक्षणीयत्वं ध्वन्यते । हा कष्टमित्यनुपमखेदे । दावेति । दावानलेन दह्यते भस्मीक्रियत इत्यन्वयः । तस्मादिदमनुचितमेवेति भावः । अत्र तृतीयचरणेनालौकिकगुणवत्त्वं लवङ्गलतायां व्यजते । एवं च जगति प्रायोऽद्य गुणिनः सुदुर्लभा एव । तत्रायं त्वचिन्त्यगुणवत्त्वात्त्वया संरक्षणीय एवेति हृदयम् । न च 'ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे' इति जयदेवप्रयोगादत्र ललितेत्यादिपदापहारः शङ्क्यः । अस्य व्यस्तत्वादिति । अत्र लवङ्गलतापदं स्त्रीत्वेन करुणरसपरिपोषार्थमेव । तेन करुणावेव रसनायकौ ॥

अथ स्पष्टं तं तटस्थमेव कारुण्योद्रेकात्स्तुवन्नन्दनान्योक्त्या स्वाशिषं व्यनक्ति—

**स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं**
**पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि ।**
**सत्यं नन्दन किं त्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते**
**त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥ ५५ ॥**

स्वर्लोकस्येति । हे नन्दन अयि सुरोद्यान, त्वं स्वर्लोकस्येन्द्रलोकस्य शिखामणिः शिरोरत्नवदलंकारीभूत इत्यर्थः । तथा । सुरेति । सुराणां देवानां ये तरवस्तेषां कल्पद्रुमाणां यो ग्रामः समूहस्तस्येत्यर्थः । अद्भुतमाश्चर्यकरं धाम स्थानम् । तथा । पौलोमीति । शचीतद्रमणयोः । पुण्येति । सुकृतपङ्क्तीनामिति यावत् । परिणतिः परिपाकोऽसीति सत्यम् । किंतु सहृदयैः सुधीभिरिदं विधिर्दैवं ब्रह्मा वा नित्यं प्रार्थ्यते याच्यत इत्यन्वयः । इदमिति किं तदाह—त्वत्त इत्यादिचतुर्थचरणेन । खाण्डवेति । खाण्डवमेतन्नामकमैन्द्रं वनं प्रसिद्धमेव । तदेव रङ्गो नृत्यभूविशेषस्तत्र ताण्डवमुद्धतनृत्यं तत्र नट इव पटुरेतादृशो वैश्वानरो दावाग्निस्त्वत्तः सकाशाद्दूरेऽस्त्विति । तस्मादचिन्त्यमहिम्नोऽपि तवैतस्मान्नृपकुमाराद्भयं भातीत्यतः सावधानेन भाव्यमिति भावः । अत्र ललितो नायकः । भयानको रसः । रूपकमलंकारः । किं च खाण्डवरङ्गेत्यादौ रौद्ररसोऽपि परिस्फुरतीति विबुधैर्ध्येयम् ॥

ततः स तटस्थोऽपि स्वमनोरथभङ्गदुःखं तं पण्डितं प्रति कीरान्योक्त्या व्यनक्ति—

**स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने**
**चञ्चूकोटिविपाटितारलकुटो यास्याम्यहं पञ्जरात् ।**
**एवं कीरवरे मनोरथमयं पीयूषमास्वादय-**
**त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥५६॥**

स्वस्वेति । जने लोके । स्वस्वेति । स्वस्वव्यापारसमासक्तचित्ततयेत्यर्थः । मत्तो मत्सकाशात् । निवृत्ते परावृत्ते सति । एतेनैकान्तलाभः सूच्यते । चञ्चिति । चञ्चवाः कोटिरग्रं तेन विपाटितो विदारित आरलकुट आराख्यलोहशलाकाविशिष्टकाष्ठविशेषो येन स तथेत्यर्थः । अत्र 'विदारिताररपुटः' इति पाठः प्रामाणिकः । अररपुटं कपाटपुटम् । 'कपाटमररं तुल्ये' इत्यमरः । एतादृशः सन्नहं पञ्जराद्यास्याम्युड्डीय गमिष्यामीति योजना । एवं कीरवरे शुकश्रेष्ठे । मनोरथमयं मनोराज्यैकविकारं पीयूषममृतमास्वादयत्यास्वादग्रहणपूर्वकं पिबति सतीति यावत् । अन्तः पञ्जराभ्यन्तरे । वारणेति । गजशुण्डाकार इत्यर्थः । महतोऽप्यहेः स्वल्परन्ध्रेऽपि प्रवेशो लोके प्रसिद्ध एवेति नानुपपत्तिः । फणीति । सर्पश्रेष्ठः संप्रविवेशेति संबन्धः । तस्मादीश्वर एवैतत्संकटादभिरक्षत्वित्याशयः । अत्र करुणो रसः । सचिन्तो नायकः । रूपकलुप्तोपमे अलंकारौ ॥

एवं नृपकुमारपण्डितवरतद्गुरुतटस्थानां परस्परं संवादे जायमानेऽकस्मादन्तःपुराद्धर्म्यमधिरूढां तद्धर्मपत्नीं निरीक्ष्य व्याकुलमनसः कांश्चित्तरुणसदस्यान्प्रति स एव पण्डितवरः कुरङ्गान्योक्त्योपदेशं व्यनक्ति—

**रे चाञ्चल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुला-**
**मेतामम्बुधिकामिनीं व्यवसिताः संगाहितुं वा कथम् ।**
**अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो**
**यद्ग्रावेव रसातलं पुनरसौ यातो गजग्रामणीः ॥ ५७ ॥**

रे चाञ्चल्येति । यूयम् । श्रितेति । 'शैलवृक्षौ नगौ' इत्यमरादाश्रितकूलद्रुमाः सन्त इत्यर्थः । एतेन विवक्षितयुवकर्तृकयुवतिविशेषनिरीक्षणे सभास्तम्भादिना निभृतत्वं ध्वन्यते । कल्लोलेति । महोर्मिपङ्क्तिसंपत्तिमतीमित्यर्थः । एतां प्रत्यक्षाम् । एतेन नैवास्माभिरिदमनुष्ठितमिति वृथैवायमुपालम्भ इत्यापादनं व्युदस्तम् । अम्बुधीति । समुद्रगाम् । गङ्गारूपां नदीमिति यावत् । एवं चोत्तरार्धवक्ष्यमाणार्थयोग्यता द्योत्यते । संगाहितुं प्रवेष्टुमिति यावत् । कथं वा व्यवसिताः कृतव्यापारा भवथेति संबन्धः । ननु किमत्रानिष्टमिति चेत्तत्राह—अत्रैवेत्युत्तरार्धेन । उच्छलदूर्ध्वं गच्छत्तच्च तदम्बु च तस्य यो निर्भर आधिक्यं तेन ये महावर्ताः 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरात्प्रसिद्धा महान्तो जलभ्रमास्तैरित्यर्थः । एवकारेण कान्तान्तरे तथा नाशसंभावनासत्वेऽपि नास्यामसाविति शङ्का परास्ता । समावर्तितो भ्रामितः । असौ महत्त्वेन प्रसिद्धः । अत एव—गजेति । करीन्द्रः पुनर्ग्रावेव पाषाणवदित्यर्थः । यद्यस्माद्रसातलं यात इत्यन्वयः । तस्मादयमनुचितारम्भा एव भवतामिति भावः । अत्र भयानकरौद्रौ रसौ । मूर्खा नायकाः । उपमालंकारः ॥

अथेममभिनवं रोषपरुषं ध्वनिमाकर्ण्य चकितमवलोकयन्तं स्वपोतं सैव युवराजयुवतिः परिसान्त्वयति—पिबेति सिंहशिशुकान्योक्त्या ।

**पिब स्तन्यं पोत त्वमिह मददन्तावलधिया**
**दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान् ।**
**त्रयाणां लोकानामपि हृदयतापं परिहर-**
**न्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥ ५८ ॥**

हे पोत अयि बालक, त्वमिह मदीयपयोधरमण्डले स्तन्यं पिबेत्यन्वयः । ननु पिबाम्येव स्तन्यं किमित्ययं निरनुयोज्यानुयोग इत्यत आह—मदेत्यादिपूर्वार्धशेषेण । त्वम् । मदेति । मदो यौवनादिविकारस्तद्वत्प्रधानाश्च ते दन्तावलाश्च 'दन्ती दन्तावलो हस्ती' इत्यमराद्गजाश्चेति गन्धद्विपादिवत्समासः । तेषां या धीर्भ्रान्त्या तद्बुद्धिस्तयेत्यर्थः । इह प्रत्यक्षेषु । हरिदिति । दिक्प्रान्तेष्विति यावत् । परुषान्रोषकषायितानेतादृशान्दृगन्तान्किमिति कुतो न हेतोराधत्से प्रसारयसीति संबन्धः । न च युक्तमेव वध्यबद्ध्या नेत्रकोणसंचारणं तद्गजेर्भ्र-

मजन्यत्वादित्याह—त्रयाणामित्युत्तरार्धेन। यतोऽयं प्रत्यक्षः। एतेनाश्रद्धेयनिरासः। त्रयाणामपि। एवं च महामहिमत्वं द्योतितम्। लोकानां भूरादीनाम्। हृदयेति। अमृतवृष्ट्यान्तस्तापं परिहरन्सन्नत एव धीरं धीरं यथा स्यात्तथा परमगम्भीरमित्यर्थः। नवोऽभिनवः स चासौ नीलो जलधरो मेघ एव ध्वनतीति योजना। तस्माच्छान्तो भवेति भावः। अत्रोदात्तो नायकः। वीरो रसः। भ्रान्तिरलंकारः॥

एवं पुत्रं समाधाय तं पण्डितवरं सा नृपकुमारतरुणी नीरदान्योक्त्या मधुरध्वनिभाषणं प्रार्थयते—

**धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः।**
**उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति॥ ५९॥**

धीरेति। हे नीरद, ते तव। धीरेति। गभीरारावैरित्यर्थः। अलं पर्याप्तम्। तत्र हेतुमाह—म इत्यादिशेषेण। मे मम मासिको मासमात्रकालिको गर्भः। गर्भस्थः सुत इति यावत्। उन्मदेति। उन्मत्तमातङ्गभ्रान्त्येत्यर्थः। मध्येजठरं जठरस्य मध्य इति यावत्। समुच्छलति सम्यगुड्डानं करोतीति योजना। तस्मान्मधुरं वक्तव्यमित्याशयः। अत्रोक्ता एव नायकादयः॥

अथ पुनरपि तैजसप्रकृतिकत्वेनातिचञ्चलं स्वबालं प्रति सैव परिसान्त्वयति—वेतण्डेति सिंहान्योक्त्या।

**वेतण्डगण्डकण्डूतिपाण्डित्यपरिपन्थिना।**
**हरिणा हरिणालीषु कथ्यतां कः पराक्रमः॥ ६०॥**

वेतण्डा गजास्तेषां ये गण्डाः कपोलास्तेषां यत्कण्डूतिपाण्डित्यं तस्य यः परिपन्थी प्रतिस्पर्धी तेनेत्यर्थः। एतादृशेन हरिणा सिंहेन। हरिणेति। मृगपङ्क्तिष्वित्यर्थः। कः पराक्रमः कथ्यताम्, अपि तु न कोऽपि कथ्यतामिति संबन्धः। तस्मादेते स्वाश्रितास्त्वया यथार्हं पूजनीयास्तथा परिपालनीया एवेति भावः। अत्र धीरो नायकः। करुणो रसः॥

ततस्तत्पितासौ नृपकुमारः कंचिदागतं नीचजनं सत्कुर्वंस्तेन पण्डितमण्डनीभूतेन सद्गुरुणा कमलान्योक्त्या प्रबोध्यते—

**नीरान्निर्मलतो जनिर्मधुरता रामामुखस्पर्धिनी**
**वासः किं च हरेः करे परिमलो गीर्वाणचेतोहरः।**
**सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह**
**त्वं चेत्प्रीतिमुरीकरोषि मधुपे तत्त्वां किमाचक्ष्महे॥ ६१॥**

नीरादिति। हे अम्भोरुह, तव निर्मलतो नीराज्जनिरुत्पत्तिः। न च संबुद्ध्यैवास्य गता-

र्थत्वात्पौनरुक्त्यापत्तिः । तत्पदस्य योगरूढत्वेऽपि 'रूढिर्योगमपहरति' इति न्यायेन शीघ्रोपस्थित्या च पद्ममात्रपरत्वात् । किंच तव मधुरता जहत्स्वार्थया 'गङ्गायां घोषः' इत्यादिवत्त्वन्मधुमाधुरीत्यर्थः । रामेति । यावत्स्त्रीगुणा या रमणी तस्या यन्मुखं निरुक्तलक्षणया तदेकदेशोऽधरस्तत्स्पर्धिनी स्वाधिक्येन तद्विरोधिनीत्यर्थः । यद्वा मधुरता 'मुखरुचा सौधाधरी माधुरी' इत्यादिवत्सुन्दरतैव । तथा च नोक्तलक्षणाद्ययासः । एवं किंच । तवेति वास इत्यत्र परिमल इत्यत्र च ज्ञेयम् । गीर्वाणा देवाः । तत्तस्मादहो इत्याश्चर्ये । त्वं महाकविगिरां सर्वस्वं सर्वत्रोपमानयोग्यत्वात्तथा कामस्य सर्वस्वम् । 'अरविन्दमशोकं च' इति प्रथमबाणत्वात् । असि । अथ त्वं चेन्मधुपे भृङ्गे, पक्षे मद्यपे नीचे, प्रीतिमुरीकरोषि स्वीकरोषि तत्तर्हि त्वां किमाचक्ष्महे कथयामो न किमपि वदाम इत्यर्थः । 'यस्य' इति पाठे यस्य तव नीरादित्यादि योजयित्वा हे अम्भोरुह, तत्त्वमहो महाकवीत्यादि योज्यम् । तस्मादिदं नैव कार्यमिति तात्पर्यम् । अत्र मूढो नायकः । श्लेषप्रतीपावलंकारौ ॥

किंच बलवच्छत्रूपेक्षा नैव कार्येति गजान्योक्त्या व्यनक्ति—

**लीलामुकुलितनयनं किं सुखशयनं समातनुषे ।**
**परिणामविषमहरिणा करिनायक वर्धते वैरम् ॥ ६२ ॥**

लीलेति । परिणामे विषमो यो हरिस्तेनेति सहार्थे तृतीया । स्पष्टमेवान्यत् । तस्मात्सावधानो भवेति भावः । अत्र प्रमत्तो नायकः । भयानको रसः । लुप्तोपमालंकारः ॥

एवं निरुक्ताचार्यवचसि विश्वासदार्ढ्यार्थं कश्चित्तटस्थस्तं राजसुतं प्रति 'सकृज्जल्पन्ति पण्डिताः' इति वचनात्तद्वचोदौर्लभ्यादि द्योतयन्सामान्यतो विदुषां वचसः प्रेक्षापूर्वकत्वाचलार्थकत्वे ध्वनयति—

**विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः ।**
**याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ ६३ ॥**

विदुषामिति । न पराञ्चन्ति वैयर्थ्यादिद्वारा नैव पराङ्मुखीभवन्तीत्यर्थः । तत्र दृष्टान्तं स्पष्टयति—द्विरदानामिति शेषेण । 'द्विरदोऽनेकपो द्विपः' इत्यमराद्गजानामिति यावत् । रदा इव दन्ता इवेत्यर्थः । वाचां नैसर्गिकनैर्मल्यशालित्वेन दृढत्वादिसंपूर्णगुणवत्त्वेनाचलत्वेन च पुंस्त्वेनोपमानमिति रदा इवेत्यनेन ध्वन्यते । तस्मात्त्वयैतद्वाक्यं श्रद्धेयमेवेति भावः । अत्र धीरो नायकः । पाण्डित्यवीरो रसः । पूर्णोपमामात्रमलंकारः ॥

अथ स एव पण्डितवरः प्रकृततटस्थं प्रति किमिति त्वमस्य मयि विश्वासं जनयसि यद्यप्ययं वदान्यस्तथाप्यपरीक्षक इति विश्वासभावाभावयोरप्यस्माकं तु फलं पामरैस्तुल्यमेव भवतीति कल्पद्रुमान्योक्त्या व्यनक्ति—

**औदार्यं भुवनत्रयेऽपि विदितं संभूतिरम्भोनिधे-**
**र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः ।**

**एवं दातृगुरोर्गुणाः सुरतरोः सर्वेऽपि लोकोत्तराः**
**स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥ ६४ ॥**

औदार्यमिति। संभूतिरुत्पत्तिः। परिमल इति। इदं पद्यं यद्यपि 'नीरान्निर्मलतः' (१।६१) इति प्राक्तनपद्ये पठितत्वाद्विशेषणपदविशिष्टमपि पुनरुक्तमेव तथापि वक्तुरुभयत्राप्येकत्वान्नीत्युपदेशावेशवशेन पौर्वापर्यानुसंधानहीनतया तथा प्रयुक्तमपि नैव दोषावहम् । प्रत्युत रसनिर्भरपोषकत्वाद्गुणावहमेव । एवमेव नैषधीयचरितेऽपि कीर्तिमण्डलपदं प्राथमिकपद्यद्वयेऽपि पठितं प्रसिद्धमेव । अत्र विशेषणचतुष्टयेऽपि सुरतरोरिति संबन्धनीयम् । तेनास्य क्रमात्कीर्तिसमुत्पत्तिनिवसतिगुणसंपत्तीनां लोकोत्तरत्वं द्योत्यते । एवं निरुक्तप्रकारेण दातृगुरोर्वदान्यमान्यस्येत्यर्थः । सुरेति । कल्पद्रुमस्येति यावत् । अत्र 'दातृगुरो सुरतरो' इति संबुध्यन्तपाठे तवेत्यध्याहार्यम् । सर्वे संपूर्णा अपि गुणास्तदा लोकोत्तरा एव । अचिन्त्या एव स्युरिति शेषः । तदा कदेत्यत्राह—स्यादित्यादिचरमचरणेन । यदि । अर्थीति । अर्थिनां सामान्यतो यावद्याचकानां प्रवरमुत्कटं यदर्थितं तस्य योऽर्पणविधिर्दानविधिस्तस्मिन्विषय इत्यर्थः । एकः केवलो विवेको योग्यतादिविचारः स्यादित्यन्वयः । तस्मादनेन विवेक एव संपादनीय इत्याशयः । इहोदात्तो नायकः । दानवीरो रसः । विनोक्तिरलंकारः ॥

एवं वदति सति पण्डितवरे तदैश्वर्यमसहमानः कश्चन पिशुनः प्रकृतराजकुमारं भ्रूसंज्ञयैवायं त्वद्गुरुरपि त्वामविवेकिनमेव मनुत इति किमस्मिन्कृतघ्ने विफलभक्तिसंपादनेनेति सूचयन्बहिरेव बहुतरविनयवानकस्मान्मृगयां विधायागच्छन्तं व्याधं मयेदं विश्वासेन मृगादिहिंसनमुचितमेव क्रियत इति कंचिदुदासीनं प्रति जल्पन्तं सन्तमालक्ष्य तेनैव पण्डितवरेण प्रस्तुताङ्कुराख्यकिरातान्योक्त्या निन्द्यते—

**एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिना-**
**मित्येवं परिचिन्त्य मात्ममनसि व्याधानुतापं कृथाः ।**
**भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः**
**साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षा नराः ॥६५॥**

एक इति । रे व्याध, त्वमहमपघृणः । 'कारुण्यं करुणा घृणा' इत्यमरादपगता घृणा दया यस्मात्स तथा । निर्दय इत्यर्थः । अत एव विश्वसतां हरिततृणादिदर्शनेन सदयत्वादिविश्वासशालिनामित्यर्थः । एतादृशां प्राणिनां मृगादिजीवानां प्राणानेक एव हरामीत्येवमात्ममनसि स्वचेतसि परिचिन्त्यानुतापं संतापं मा कृथाः । नैव कुर्विति संबन्धः । 'मा स्म' इत्यपि पाठः । तत्र हेतुः—भूपानामित्युत्तरार्धेन । गूढेति । अप्रकटपरघातकरणाद्यभिप्राया इति यावत् । एतादृशः । तत्रापि साधूनामरयः । अत एव—त्वत्तुल्येति । त्वया सह तुल्या समाना कक्षा गूढहिंसनादिकल्पना येषां ते तथा । एतादृशो नराः । 'खलाः' इत्यपि पाठः । कति न वसन्ति । अपि तु सहस्रशो वसन्तीति योजना । तस्माद्भवता निरुक्तपिशुनानात्मसाम्येना-

नुसंधायोक्तानुतापस्त्याज्य एवेति भावः । अत्र शठो नायकः । करुणो रसः । अलंकारस्तूक्त एव ॥

ततोऽतिक्षुब्धचेतस्तया स एव पण्डितः पृथ्वीमप्युपालभते—

**विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतमाः ।**
**तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः ॥६६॥**

विश्वास्येति । हे मातः काश्यपि । 'क्षोणी ज्या काश्यपी क्षितिः' इत्यमरादयिं मातर्धरणीत्यर्थः । त्वं तानपि दधासि । अतस्तवापि च विवेको यातो गत एवेत्यन्वयः । तान्कानित्यत्राह—विश्वास्येति पूर्वार्धेन । ये नरा नम्रतमाः सन्तो मधुरवचनैः साधून्विश्वास्य वञ्चयन्तीति संबन्धः । अत्र काश्यपिपदेन विवेकार्हत्वं द्योत्यते । इह प्रौढा नायिका । उक्त एव रसः । काव्यलिङ्गमलंकारः ॥

एवं पण्डितवरं रुष्टमालक्ष्य स राजकुमारः परिसान्त्वयन्सामान्यतो विदुषः स्तौति—

**अन्या जगद्धितमयी मनसः प्रवृत्ति-**
**रन्यैव कापि रचना वचनावलीनाम् ।**
**लोकोत्तरा च कृतिराकृतिरार्तहृद्या**
**विद्यावतां सकलमेव गिरां दवीयः ॥ ६७ ॥**

अन्येति । निरुपमगुणत्वेन विलक्षणैवेत्यर्थः । कृतिराचारः । दवीयः । 'दवीयश्च दविष्ठं च सुदूरे' इत्यमरादतिदूरमेवास्तीत्यन्वयः । इह ललितो नायकः । अद्भुतो रसः । भेदकातिशयोक्तिरलंकारः ॥

अथ स एव नरवरकुमारस्तमेव स्वगुरुं प्रति निजापराधक्षमापनप्रार्थनं व्यनक्ति—

**आपद्गतः खलु महाशयचक्रवर्ती**
**विस्तारयत्यकृतपूर्वमुदारभावम् ।**
**कालागरुर्दहनमध्यगतः समन्ता-**
**ल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ ६८ ॥**

आपद्गत इति । महाशयेति । महान्विशालो गम्भीरश्चाशयोऽभिप्रायो येषां तेषां बुद्धिशालिनां पुंसां यश्चक्रवर्ती । सार्वभौम इत्यर्थः । स कश्चिद्धीरवरस्तावदापद्गतोऽपि विपद्ग्रस्तोऽपि । एवं चात्र सावधानत्वानर्हत्वं ध्वन्यते । अकृतेति । पूर्वं कृतः प्राक्केनचिदनुष्ठित इति कृतपूर्वः । तादृशो न भवतीत्यकृतपूर्वस्तम् । विचित्रमिति यावत् । एतादृशमुदारभावमौदार्यमित्यर्थः । विस्तारयति खल्विति योजना । उक्तमेवार्थं दृष्टान्तेन दृढयति—कालेति । कृष्णागरुसंज्ञकः प्रसिद्धश्चन्दनविशेषः । दहनेति । दहनो वह्निस्तस्य मध्यस्तं गतोऽपि परमदह्य-

मानोऽपीत्यर्थः । समन्तात्परितः, नत्वेकदेशे । तत्रापि लोकोत्तरमलौकिकं न तु सामान्यं परिमलं सुगन्धं प्रकटीकरोतीति संबन्धः । तस्मान्मदपराधाः श्रीमद्भिः स्वाभाव्यादेव क्षम्यन्तें । तथाप्यधीरतयाहं व्यर्थमेव प्रार्थयामीत्याशयः । अत्र धीरो नायकः । निरुक्त एव रसः । दृष्टान्तोऽलंकारः ॥

न चास्त्वेवमस्माकं स्वभावाच्छमस्तथापि त्वयि राजप्रकृतित्वेन 'यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु तत्र चतुष्टयम् ॥' इति, 'यत्र श्रीर्यौवनं वापि शारदा वापि तिष्ठति । तत्र सर्वान्धता नित्यं मूर्खत्वमपि जायते ॥' इति च बृहन्नारदीये कपिलाचार्यवचनाच्च मद्वचसा 'हितं मनोहारि च दुर्लभं वचः' इति न्यायेन कोपश्चेदनुचितमेवेति वाच्यम् । गुरूणां भवादृशामस्मदेकहितार्थं कोपघटितत्वेन परुषवाक्यस्यापि काश्मीरकटुत्ववत्तोषैकपोषकत्वादित्याशयेन महतां कोपमपि सामान्यतो रम्यत्वेनैव वर्णयति—

**विश्वाभिरामगुणगौरवगुम्फितानां**
**रोषोऽपि निर्मलधियां रमणीय एव ।**
**लोकंपृणैः परिमलैः परिपूरितस्य**
**काश्मीरजस्य कटुतापि नितान्तरम्या ॥ ६९ ॥**

विश्वेति । विश्वस्मिञ्जगति येऽभिरामाः सुन्दरा एतादृशा ये गुणास्तेषां यद्गौरवं पौष्कल्यं तेन गुम्फिता ग्रथितास्तेषामित्यर्थः । एतादृशां निर्मलधियां सुमनसां रोषोऽपि कोपोऽपि रमणीय एवेति यथाश्रुतमेवान्वयः । अपिना हितोपदेशार्थं स चेत्किमु वक्तव्यमिति द्योत्यते । तत्र दृष्टान्तं स्पष्टयति—लोकमित्युत्तरार्धेन । लोकं जगत्पृणन्ति परितोषयन्तीति तथा तैः । काश्मीरेति । कुङ्कुमस्येत्यर्थः । इह नायकाद्युक्तमेव ॥

अथ श्रीमदग्रे क्षमादिप्रार्थनादावपि क्व नामास्माकं पामराणां सामर्थ्यमिति स्वविनयं व्यग्र्यं चापनयन्स एव राजकुमारः स्वस्य प्रकृतमेव गुरुं प्रति तन्माहात्म्यं ध्वनयति—

**लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो**
**विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः ।**
**अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः**
**सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥ ७० ॥**

लीलेति । विद्येति । विद्याया ऋगादिचतुर्दशान्यतमाया यत्सद्म गृहं तस्माद्विनिर्गलन्तोऽवकरादिना सह च्यवन्तो ये कणा धान्यलेशा इवाक्षराद्यंशास्तान्मुष्णन्ति स्तेयेनापहरन्ति ते तथा । एतादृशोऽत एव पामरा मादृशो नीचा जनाः । लीलेति । लीलया हेलया न त्वायासेन लुण्ठिता हठाद्गृहीताः। शारदायाः सरस्वत्या यत्पुरं नगरम् । न तु गृहं नापि ग्रामः । तस्य महासंपद्भरा उत्कटैश्वर्यसंभारा यैस्ते तथा तेषां भवादृशां निरतिशयविदुषां पु-

रोऽग्रे वल्गन्ति चेद्रटन्ति यदि तर्ह्यद्याधुनैव श्वो वा फणिनां सर्पाणां मूर्धसु मस्तकेषु । शकुन्तेति । पक्षिपोताः । तथा दन्तावलानां गजानाम् । मूर्धस्विति सर्वत्रानुषज्यते । शशाः प्रसिद्धा एव । एवं सिंहानां मूर्धसु शालावृकाः श्वानो वा 'शालावृकाः कपिक्रोष्टृश्वानः' इत्यमरात्कोष्टारः । पदं चरणं सुखेनानायासेनैव धास्यन्ति स्थापयिष्यन्तीति योजना । 'मूर्धनि' इत्येकवचनान्तोऽपि पाठः । तत्राप्यनर्थान्तरमेव । तस्मात् 'नभः पतन्त्यात्मसमं पतत्त्रिणः' इति न्यायात्स्वशक्त्यनुसारेण स्वापराधक्षमापनार्थमेव मया यत्किंचिच्छ्रीमच्चरणनलिनाग्रे यथाकथंचित्प्रार्थ्यते । न तु पाण्डित्यप्रकटनार्थमतः क्षन्तव्यमेवेति भावः । अत्रोदात्तो नायकः । पाण्डित्यवीरो रसः । यथासंख्यमलंकारः ॥

किंच न केवलं महतां कोपे कमनीयत्वमात्रं किंतु तत्कृतपरुषवाग्भिस्तर्जितानां मादृशां शिष्याणां महत्त्वापादकत्वमपीति स एव राजकुमारः प्रकृतं स्वगुरुं प्रति द्योतयति—

**गीर्भिर्गुरूणां परुषाक्षराभि-**
**स्तिरस्कृता यान्ति नरा महत्त्वम् ।**
**अलब्धशाणोत्कषणा नृपाणां**
**न जातु मौलौ मणयो वसन्ति ॥ ७१ ॥**

गीर्भिरिति । नरा गुरूणां परुषाक्षराभिर्न तु तादृगर्थाभिर्गीर्भिस्तिरस्कृताः सन्तो महत्वं यान्तीति संबन्धः । तमेवार्थमर्थान्तरन्यासेन द्रढयति—अलब्धेति । न लब्धं शाणोत्कषणं यैस्ते तथा । एतादृशो मणयो जातु कदाचिदपि नृपाणां मौलौ मुकुटे नैव वसन्तीत्यन्वयः । तस्मान्न मम रोषलेशोऽपीत्याशयः । तस्मादुक्ततिरस्करणमिष्टमेवेति भावः । इह धीरो नायकः । शान्तो रसः । अर्थान्तरन्यासोऽलंकारः ॥

एवं नरवरकुमारेण संप्रार्थितोऽपि प्रकृतः पण्डितः प्राक्तनं 'एको विश्वसताम्' (१।६५) इति पद्यावतरणे समुपक्षिप्तं कंचित्पिशुनं पुनरपि निन्दंस्तं स्वशिष्यं प्रति दुर्जनाः सर्वथा त्याज्या एव, नो चेद्राजैकानुवर्तिनीनां सर्वप्रजानामपि तथात्वापाताद्राष्ट्रभङ्गप्रसङ्ग इति द्योतयति—

**वहति विषधरान्पटीरजन्मा**
**शिरसि मषीपटलं दधाति दीपः ।**
**विधुरपि भजतेतरां कलङ्कं**
**पिशुनजनं च बिभर्ति यत्क्षितीन्द्रः ॥ ७२ ॥**

वहतीति । पटीरजन्मा मलयजश्चन्दनविशेष इत्यर्थः । विषेति । सर्पानित्यर्थः । वहति धारयतीति यावत् । विषधरपदमत्र साभिप्रायम् । तेन तद्धारणानौचित्यं सूचितम् । दीपः शिरसि मषीपटलं दधातीति संबन्धः । मषीति । कज्जलभारमित्यर्थः । एवं वन्यग्राम्योदाहरणे

स्फुटीकृत्य दिव्यमपि ताद्विशदयति—विधुरपीति । विधुश्चन्द्रः । अपिः समुच्चये । पूर्णचन्द्रोऽपि कलङ्कं भजतेतरामत्यन्तं सेवत इति यावत् । तत्र हेतुः—पिशुनेति शेषेण । चोऽप्यर्थे । यद्यस्मात्क्षितीन्द्रोऽपि न तु क्षुद्रोऽपि पिशुनजनं दुर्जनसंघं बिभर्ति पोषयतीत्यन्वयः । यतो राजैव दुर्जनरञ्जकस्ततो दिव्यादिभिरपि यदा कलङ्कादिरङ्गीकृतस्तदा कैव कथा मनुष्याणामतस्त्वयेदं नैव कार्यमिति तात्पर्यम् । अत्र संबोध्यो नायकः । काव्यलिङ्गानुप्राणितगम्योत्प्रेक्षालंकारः । 'खलु बिभ्रति क्षितीन्द्राः' इति पाठे त्वितरराजवत्तवापि पिशुनपोषकत्वे त्वत्प्रजानां तथात्वापत्त्या राष्ट्रभङ्गोऽवश्यंभावीत्यतस्तत्त्याज्यमेवेति भावः ॥

एवं गुरुवाक्यमाकर्ण्य स एव राजकुमारः खलानामपि सद्गुणोत्पादनार्थमनुरञ्जनपूर्वकं सद्भिरपि संग्रहणं करणीयमेवेत्याकूतेन तथा स्वभाववत्तया तद्वर्णनं प्रणयति—सत्पूरुष इत्यादिद्वाभ्याम् ।

**सत्पूरुषः खलु हिताचरणैरमन्द-**
**मानन्दयत्यखिललोकमनुक्त एव ।**
**आराधितः कथय केन करैरुदारै-**
**रिन्दुर्विकासयति कैरविणीकुलानि ॥ ७३ ॥**

सदिति । पुरुष एव पूरुषः । संश्चासौ पूरुषश्चेति तथा । साधुजन इत्यर्थः । अनुक्त एवाप्रार्थित एव सन्नित्यर्थः । अखिलेति । सर्वजगदपीति यावत् । हितेति । तत्कल्याणव्यापारैरित्यर्थः । नतु तात्कालिकसुखाभासजनकैः स्रक्चन्दनाङ्गनासङ्गसंघटनैरिति यावत् । अमन्दं प्रचुरं यथा स्यात्तथा । आनन्दयति खलु संतोषयत्येवेत्यन्वयः । तदेवार्थान्तरन्यासेन द्रढयति—आराधित इत्युत्तरार्धेन । इन्दुः केनाराधितः सन्कैरविणीकुलान्युदारैः करैर्विकासयतीति कथयेति योजना । एतेन नेयं व्याप्तिरिति प्रत्युक्तम् । एवं च निरुक्तप्रयोजनार्थं सद्भिर्दुर्जना अपि रञ्जनीया एवेति भावः । नो चेत्स्वभावभङ्गप्रसङ्ग इति तत्त्वम् । अत्र ललितो नायकः । करुणो रसः । उक्त एवालंकारः ॥

**परार्थव्यासङ्गादुपजहदथ स्वार्थपरता-**
**मभेदैकत्वं यो वहति गुणभूतेषु सततम् ।**
**स्वभावाद्यस्यान्तः स्फुरति ललितो दातृमहिमा**
**समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥ ७४ ॥**

परार्थेति । स कोऽप्यनिर्वाच्यगुणगणः पुरुषो जयतितरामित्यन्वयः । तरपा परिच्छिन्नसर्वोत्कर्षवर्तनव्युदासः । कोऽसावित्यत आह—परार्थेत्यादिविशेषणत्रयेण । यः परार्थेति । परस्मा अयं परार्थः । स चासौ व्यासङ्गो व्यापारश्चेति तथा तस्मादित्यर्थः । स्वार्थेति । स्वपुरुषार्थपरायणतामपीति यावत् । उपजहदुपजहाति त्यजतीति तथैतादृशः सन् । अभेदेति । न विद्यते भेदो जलतरङ्गादिन्यायेन द्वैतावभासो यस्मिंस्तच्च तदेकत्वं चेति तथा ।

विशुद्धैकामिति यावत् । एतेनौपचारिकप्रेम प्रत्यस्तम् । सततं सर्वदा । इदं च देहलीदीप-न्यायेनोभयत्राप्यन्वेति । तेन प्रेम्णः क्षणिकत्वं गुणानां च तथात्वं प्रत्युक्तम् । गुणेति । 'युक्ते क्ष्मादावृते भूतम्' इत्यमराद्भूतपदस्य ऋतशब्दितसत्यार्थकत्वेनावधारणफलकत्वाद्गुणा एवेति तथा । तेषु मूर्तिमच्छान्त्यादिगुणेष्वित्यर्थः । सुजनेष्विति यावत् । वहति स्वीकरोतीति संबन्धः । पुनः कः सः । स्वभावादिति । यस्मान्तःस्वभावादेव न तु लोकप्रार्थनादिहेतोरित्यर्थः । अत एव ललितो निष्कामतया सुन्दरो दातृमहिमा वदान्यमाहात्म्यमित्यर्थः। 'उदात्त—' इति पाठे तु कर्मधारयः । स्फुरतीति योजना । एतेन निरतिशयौदार्यं सूचितम् । पुनः कः सः । समर्थ इति । यो नित्यं न तु क्षणमात्रं समर्थो दक्षः । अस्तीति शेषः । एतेनाचिन्त्यशक्तिमत्त्वं व्यज्यते । अत्र विशेषणत्रयेऽपि यथेच्छं हेतुहेतुमद्भावः । इह प्रथमे परमगुणज्ञत्वं द्वितीये वदान्यमान्यत्वं तृतीये तद्रक्षणक्षमत्वं च क्रमाद्ध्वनितम् । तस्माद्भवादृशां महतां 'अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ।।' इति वचनान्निरुपाधिकमेव सर्वानुग्रहशीलत्वमित्याकूतम् । इह नायकाद्युक्तमेव ॥

अथ स तद्गुरुः सत्यमेव सर्वानुग्राहकत्वं स्वाभाव्यात्सतां तथापि भवादृशै राजकुमारैः सत्सङ्ग एव दुःसङ्गवर्जनपूर्वकं विधेय इत्यन्वयव्यतिरेकाभ्यामर्थान्तरन्यासाभ्यामुपदिशन्व्याप्ती प्रतिबोधयति—वंशभवेत्यादिद्वाभ्याम् ।

**वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।**
**न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ ७५ ॥**

वंशः कुलम्, पक्षे वेणुः । गुणः शमादिः, पक्षे तन्त्री । इह संबोध्यो नायकः । शिष्टं स्पष्टमेव॥

**अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।**
**निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ७६ ॥**

निखिलेति । नष्टपुंस्त्वाद्यापादकत्वात्तथात्वं बोध्यम् । यद्यपि तत्कामानां स निर्दुष्ट एव, तथापि तच्छास्त्रविदां पुष्ट्याद्यापादकपाकादावनुपयुक्तत्वाद्दुष्टत्वविवक्षयैव तथात्वेनोदाहृत इति ध्येयम् । नो चेत्तत्तत्कामुकेप्सितत्वेन किंचिदपि दुष्टं नैव स्यादिति दिक् । अधिकं तु साहित्यसारे दोषरत्नादावस्माभिः प्रपञ्चितमित्यत्रोपरम्यते ॥

किंच सतां किंचिदपकारेऽपि दैववशादज्ञानादिना संपद्यमाने ते तावदुपकारमेव कुर्वन्तीत्यतोऽपि सत्सङ्ग एव कर्तव्यो न तु कदाचिद्दुःसङ्गोऽपीत्याशयेन पुनः स एव सद्गुरुः प्रकृतमेव नरवरकुमारं प्रतिबोधयति—

**उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।**
**मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ७७ ॥**

उपकारमेवेति । सद्गुणः सन्तः शुभा गुणा अस्येति तथा । सुजन इत्यर्थः । नितरामिति-

पदं सर्वत्र संबद्ध्यते । एवं च साद्गुण्यस्य त्रैकालिकत्वं व्यज्यते । विपदिति । अतिविपद्ग्रस्तोऽपीति यावत् । उपकारमेव नितरां तनुते विपुलं विस्तारयतीति संबन्धः । अत्रास्मिन्नुक्तविषये । मूर्छामिति । मूर्छां गतो मूर्छित इत्यर्थः । केनचिद्युक्तिविशेषेण स्तम्भित इति यावत् । वाथवा मृतो भस्मीभूत इत्यर्थः । एतादृशः पारद एतन्नामको रसो रसायनविशेषः । एवं च न रसपदेन पौनरुक्त्यम् । निदर्शनमुदाहरणमस्तीत्यन्वयः । पारदो हि मूर्च्छितो वा भस्मीभूतो वा रोगपरिहारादीष्टं संपादयत्येवेति लोके दृष्टमेव । अतः सद्गुणः पुरुषो नितरां विपद्गतोऽप्युपकारमेव तनुत इति निर्णीयत इति तात्पर्यम् । इह ललितो नायकः । दृष्टान्तोऽलंकारः । उपगीतिर्वृत्तम् । तदुक्तं वृत्तरत्नाकरे—'आर्या द्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥' इति ॥

ननु दुःसङ्गाद्दुर्मार्गप्रवृत्तिस्ततः पापोत्पत्तिस्तस्माद्धेतोरेव यदि सर्वदा दुःसङ्गः कर्तुमनुचितः किलेति तर्हि 'धर्मेण पापमपनुदति' इति श्रुतेरैश्वर्यसाध्येन धर्मेण निरुक्तपापं पराकरिष्यामस्ततः का नः क्षतिर्दुर्जनसङ्गतोऽपीत्याशङ्कयैश्वर्यस्य क्षणिकत्वान्नैवमिति सीतावृत्तान्तकथनेन ध्वनयति—

**वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता**
**भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या ।**
**अहो सेयं सीता दशवदननीता हलरदैः**
**परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ॥७८॥**

वनान्त इति । या वनान्ते दण्डकारण्यप्रान्ते । गोदावरीतीरादावित्यर्थः । 'वनान्तः' इति पाठे तु वनमध्य इति यावत् । खेलन्ती क्रीडन्ती सती । शशकेति । शशशावकमालोक्य चकिता सती भयहर्तुः सर्वेश्वरत्वेन यावद्भयभञ्जदक्षस्येत्यर्थः । एतादृशस्य । भुजेति । बाह्वेकदेशम् । सपदि तत्कालं न तु विलम्बेन । एतेन भीत्यतिशयो व्यज्यते । भजतीष्टसाधनताधिया सेवत इत्यर्थः । अहो इत्याश्चर्ये । सा निरुक्तगुणेयं वर्ण्यत्वेन बुद्धिस्थतया प्रत्यक्षा । दशेति । अतएव—हलेति । हलानीव लाङ्गलानीव रदा दन्ता येषां तैः । एतादृशै रक्षोभिः संरक्षकराक्षसैः परीताशोकवनिकायां परिवृता । अतएव विवशा पराधीना सती कामप्यनिर्वाच्यभीत्यादिरूपामिति यावत् । एतादृशीं दशामवस्थां श्रयत्यवलम्बत इत्यन्वयः । तस्मादैश्वर्यमदेनापि नैव दुःसङ्गः कार्य इति तात्पर्यम् । इह मध्या स्वकीया नायिका । भयानको रसः । काव्यलिङ्गमलंकारः ॥

नन्वेवमपि सीतायाः किंचित्कालं लोकलीलान्यायेनैश्वर्यतिरोभावाभासेऽपि पुनस्तन्निरतिशयत्वस्य रावणवधाद्युत्तरं सुप्रसिद्धत्वान्नैतन्निदर्शनेनैश्वर्यवत्वाद्धर्मक्षयेण पुंसा दुर्मार्गप्रवृत्त्यादिना पापसंपादको दुःसङ्गः सर्वथा त्याज्य एवेति सिद्ध्यतीत्यस्वरसात्स्मरनिदर्शनेन तद्द्रढयति स एव सद्गुरुः प्रकृतनृपतिसुतं प्रति—

पुरो गीर्वाणानां निजभुजबलाहोपुरुषिका-
महो कारंकारं पुरभिदि शरं संमुखयतः ।
स्मरस्य स्वर्बालानयनसुममालार्चनपदं
वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥ ७९ ॥

पुर इति । गीर्वाणानां देवानां पुरोऽग्रे । अहो इत्याश्चर्ये । निजेति । निजस्यात्मनो यद्भुजबलं बाहुबलं तेन याहोपुरुषिका 'आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि' इत्यमराद्गर्वेण धन्यंमन्यता तामित्यर्थः । कारंकारं भूयः कृत्वेति यावत् । पुरेति । साभिप्रायमिदम् । त्रिपुरदग्धर्यपीत्यर्थः । एवं च येन परमदुर्जयत्रिपुरासुरः सपरिवारपुरोऽपि क्षणाद्भस्मीकृतस्तत्र त्रिलोचने भगवति कैव गणना पञ्चशरमशकस्येति द्योत्यते । शरं बाणं संमुखयतोऽभिमुखं संदधत इत्यर्थः । एतादृशस्य स्मरस्य मदनस्य वपुः शरीरम् । स्वरिति । स्वः स्वर्गसंबन्धिन्यो या बाला अप्सरसस्तासां यानि नयनानि नेत्राणि तान्येव सुमानि सुष्ठु सुतरां वा मा लक्ष्मीर्येषु तानि 'लक्ष्मीः पद्मालया' इत्यमरात्कमलानि तेषां या मालेव माला । कटाक्षपरम्परेति यावत् । तया यदर्चनं पूजनं तस्य पदं स्थानं पात्रमित्यर्थः । एतादृशमपि सत् । सद्यस्तत्कालमेव, न तु विलम्बेन । भालेति । भालस्य धूर्जटिललाटस्य संबन्धी योऽनलः पावकस्तेन यद्भसितजालं 'भूतिर्भसितभस्मनि' इत्यमराद्भस्मपुञ्जस्तस्यास्पदं स्थानमभूदिति सरलमेव । यस्माज्जगज्जयिनोऽपि मन्मथस्य क्षणाद्भस्मीभूतत्वं सुप्रसिद्धमेव । तदा कैव कथाधुनिकवीराणाम् । अतो नैवैश्वर्याद्याश्रयेण धर्मविधानात्पापपरिजिहीर्षाशया तत्संपादको दुःसङ्गः कालत्रयेऽपि विधेय इत्याशयः । इह साहसी नायकः । पूर्वार्धे वीरस्तृतीयपादे शृङ्गारश्चतुर्थपादे करुणः सर्वैर्मिलित्वा शान्तश्च रसः । परिकरोऽलंकारः ॥

एवं तदुक्तिं श्रुत्वा तत्रत्य एव प्रागुक्तः पिशुनस्तावद्विदूषक इव तद्वाक्यस्य अहहेति शब्दपूर्वकं हस्ताभिनयेनोपहासमेवाकरोत् । अतः क्रुद्धः स पण्डितवरः पुनः स्फुटमेव मर्कटदृष्टान्तेन तन्निन्दनं ध्वनयति—

युक्तं सभायां खलु मर्कटानां
शाखास्तरूणां मृदुलासनानि ।
सुभाषितं चीत्कृतिरातिथेयी
दन्तैर्नखाग्रैश्च विपाटितानि ॥ ८० ॥

युक्तमिति । मर्कटानां सभायां तरूणां शाखा मृदुलासनानि । तथा चीत्कृतिश्चीत्कारः सुभाषितम् । तथा दन्तैर्नखाग्रैश्च विपाटितानि परस्परं विदारणान्यातिथेयी अतिथौ साधुस्तथा । तत्पूज्येत्यर्थः । इति युक्तं खल्विति योजना ॥

एवं श्रीगुरोः क्षोभमवलोक्य तदुपशमनार्थमतिनम्रीभूय 'भो भोः श्रीमदाचार्य, क्षम्यता-

मस्मदादीनामपराधकदम्बम्, तथा मया यत्किंचित्पृच्छ्यते प्रश्नपञ्चकेन प्रपञ्चरहस्यं तन्नी-र्णीयोपदिश्यतां च' इति राजकुमारः संप्रार्थ्य पृच्छति—

**किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः**
**किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः ।**
**किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे**
**कः शत्रुर्वद खेददानकुशलो दुर्वासनानां चयः ॥ ८१ ॥**

किं तीर्थमिति। तदुत्तरयति—हरीति। एवमेव प्रश्नोत्तरपरम्परेयं पर्यायचतुष्टयेऽप्यग्रे बो-ध्या। अच्छेति। स्वच्छेत्यर्थः। विषयित्वस्वभावशाली राजतनूजो भेदवादाभिनिवेशात्तत्प्रति-पादकशास्त्रेषु किमुत्तमं शास्त्रं यस्य श्रवणे तात्पर्यनिर्णये जाते सति द्वैतं तिष्ठत्येव येन विषयसुखं मोक्षसुखं चास्माकं स्यादित्याशयेन पृच्छति—किं शास्त्रमित्यादिना। गुरुः स्वचातुरीमाहा-त्म्येन तदभिमतविशेषण एवाद्वैतित्वेन तृतीयान्तविवक्षया समाधत्ते—श्रवणेनेति। द्वैतेति। दृश्यरूपध्वान्ताभ्युदय इति यावत्। अत्र यच्छब्दानुरोधेन पूर्वं तच्छास्त्रं किमिति प्रश्नेऽपि तच्छब्दाध्याहारो बोध्यः। सततेति। निरन्तरोपकारतत्परमित्यर्थः। मित्त्रं विशेषणादेवात्र क्लीबत्वम्। पुंलिङ्गपाठस्तु किं शास्त्रमित्यादिप्राक्तनप्रश्ने। तथा कः शत्रुरित्याद्युत्तरप्रश्नेऽपि विशिष्टस्यैव पृष्टत्वेन तत्स्वारस्यान्मध्यवर्तिनः किं मित्त्रमित्यादि प्रश्नस्यापि संदंशन्यायेन तथैव वक्तुमुचितत्वादसततोपकाररसिकस्य तत्त्वावबोधस्यादृष्टत्वेन तद्व्युदासार्थं निरुक्तविशेषणान-पेक्षणाच्चानुचित एव। हे सखे इति संबोधनं तु हरिपादेत्यादि समाधानपञ्चकेऽपि ज्ञे-यम्। तेन सौहार्दातिशयध्वननान्निरुक्तोत्तरेऽप्याश्वसनीयतमत्वं व्यज्यते। तत्त्वेति। अ-द्वयात्मसाक्षात्कारेति यावत्। अत्रैव सखे इति संबोधनप्रयोगादेतदपेक्षयान्यद्रहस्यं नैवेति द्योत्यते। एवं वदेति पदमपि प्रश्नपञ्चकेऽपि। तथा तदनुरोधात्त्वंपदाध्याहारश्च कर्तव्य एव। खेदेति। दुःखदानदक्ष इत्यर्थः। दुर्वासनानामन्तःकरणादिनिष्ठदुष्टसंस्काराणां चयः संघ एवेति योज्यम्। 'सखा' इति प्रथमान्तपाठः 'संचयः' इति पाठश्च कः सखेत्यध्या-हारापत्तेः क्रमभङ्गापत्तेः प्रश्नसरणित्यागापत्तेः सखिमित्त्रयोरवान्तरविशेषेऽपि हितकारि-त्वाविशेषेण पौनरुक्त्यापत्तेः खेददानकुशल इत्यत्रापि क्रमभङ्गभिया प्रश्नान्तरत्वाद्यापत्ते-रन्यथा दुर्वासनेत्यादावनन्वितत्वापत्तेश्च संबुद्ध्यन्तपाठेऽपि क्रमभङ्गदोषस्य तु प्रथमे चरण एवाविशिष्टपृष्टत्वेन पराकरणीयत्वादनुचित एव। तथा 'सम्'पदेन गुणानाधानात्प्रत्युत पदचतुष्टयसमासघटकत्वाच्च तस्य मधुररसे प्रक्रतेऽनुपयुक्तत्वाच्च तथैव सोऽपीति ध्येयं धीरैः। अत्र किं शास्त्रमित्यादिविशिष्टप्रश्नत्रयेऽपि क्रमाद्धर्ममीमांसायाः सुग्रीवादिवद्यत्किं-चित्कालावच्छेदेनोपकारपरायणमित्त्रस्य शिशुपालादिलक्षणस्य खेददानाकुलस्य शत्रोरपि व्युदासः सूचितः। तस्माद्धरिपादपद्मभजनादिचतुष्टयं पुमर्थचतुष्टयेच्छुना संपादनीयमेव तथा दुर्वासनाध्वंसनं चेति तत्त्वम्। इह बुभुत्सुर्नायकः। शान्तो रसः। उक्तिप्रत्यु-क्तिरलंकारः॥

अथैवं निरुक्तराजपुत्रः सद्गुरूक्तं सकलपुरुषार्थनिधानमवधार्य परमं परितुष्ट इति कश्चित्तत्रैवोपविष्टो दुष्टो दृष्ट्वा मैनाकदृष्टान्तेन तन्निन्दनमेव व्यङ्ग्यमर्यादया व्याचष्टे—

**निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः ।**
**चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ८२ ॥**

निष्णातोऽपीति । निष्णातो नितरां स्नात इव निमग्नोऽपीत्यर्थः । अपिना तदन्यस्य कैव कथेति ध्वन्यते । मार्दवं मृदुत्वम् । एवं च तवेदं वञ्चकत्वमेवोपदेशवचनमिति तात्पर्यम् । इह धूर्तो नायकः । वीरो रसः । उपमालंकारः ॥

एवं निन्दनाकर्णनेनातिखिन्नः स गुरुः स्वगतमेवाद्वैतित्वाच्छ्लेषेण गुणान्निन्दति—

**नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।**
**शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥८३॥**

नैर्गुण्यमेवेति । मौर्ख्यमेव । पक्षेऽद्वैतब्रह्मत्वमेव । साधीयः 'साधीयान्साधुबाढयोः' इत्यमरात्साधिवत्यर्थः । स्पष्टमेव धिगित्यादि । तदेवार्थान्तरन्यासेन द्रढयति—शाखिन इत्युत्तरार्धेन । शाखिनः 'वृक्षो महीरुहः शाखी' इत्यमराद्वृक्षा इत्यर्थः । चन्दनेति । अत्र यद्यपि द्रुमपदमधिकमेव तथापि वक्तुर्निर्वेदाविष्टचेतस्कत्वेनानवधानध्वनकमिति युक्तमेव । अत्र निर्विण्णो नायकः । शान्तो रसः । अर्थान्तरन्यासः श्लेषश्चालंकारः ॥

एतावदवमानो मम धनयाच्ञामूल एवेति विभाव्य स एव पण्डितस्तन्निन्दां ध्वनयन्वृक्षजीवनमेव धन्यत्वेन वर्णयति—

**परोपसर्पणानन्तचिन्तानलशिखाशतैः ।**
**अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥ ८४ ॥**

परेति । परं प्रत्यन्यं प्रति यदुपसर्पणं स्वीययोगक्षेमार्थमुपगमनं तेनानन्ता दुरन्ता या चिन्ता सैवानलोऽग्निस्तस्य याः शिखा ज्वालास्तासां शतानि तैरित्यर्थः । अत्रानन्तेत्यादिना दुःसहत्वं द्योत्यते । अचुम्बितेति । न चुम्बितमेकदेशेऽपि स्पृष्टमन्तःकरणं येषां ते तथा । एतादृशाः पादपा वृक्षाः । अत एव साधु शोभनं यथा स्यात्तथा जीवन्तीति संबन्धः । तस्मादयाचितव्रतानामेव चारु जीवितम्, नैवान्येषामिति तात्पर्यम् । अत्राप्युक्तावेव नायकरसौ । अप्रस्तुतप्रशंसा परिकरश्चालंकारः ॥

अथैवं सद्गुरुनिर्वेदमालक्ष्य स राजपुत्रः श्रीगुरुं प्रति 'भो भो भगवन्, अनेन तटस्थेन 'निष्णातोऽपि च' (१।८२) इत्यादि पद्यं यत्त्वां प्रत्युक्तं तत्त्वामुद्दिश्य नैवोक्तम्, किं तु यन्मया पूर्वपद्ये 'किं शास्त्रम्' (१।८१) इत्यादिना भेदवादाभिनिवेशेन पृष्टम्, तत्त्वादृशाचार्यचरणान्तेवासिनो मेऽनुचितमेवेत्यभिसंधाय मदुद्देशेनैवोक्तम्, अतो नैतदपराधबुद्ध्या मनः खेदनीयमिति प्रार्थयंस्तेन सज्जनसामान्यस्तुत्या ध्वनिपद्धतितः स्तौति—

**शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः।**
**विवराणि मुद्रयन्द्रागूर्णायुरिव सज्जनो जयति ॥ ८५ ॥**

शून्येऽपि चेति। सज्जन ऊर्णायुरिव लूताकीट इव शून्येऽपि च शून्यहृदये पुंस्यपि विषये। पक्षे गृहाकाशदेशेऽपीत्यर्थः। स्वकीयेति। नैजवाग्मित्वादिसद्धर्मसंघैः। पक्षे सूत्रपटलैरित्यर्थः। गुणवत्तां पक्षद्वयेऽपि यथाक्रमं निरुक्तगुणवैशिष्ट्यमिति यावत्। आतन्वान आतनोतीति तथा विस्तारयन्। अत एव विवराणि दोषस्थानानि परच्छिद्राणि। पक्षे गवाक्षादिगृहरन्ध्राणि। मुद्रयन्मुद्रितानि कुर्वन्। आच्छादयन्नित्यर्थः। पक्षे संजातचक्राणि विदधन्सन्। द्राक् शीघ्रं जयतीति योजना। तस्मात्त्वत्पाटवमेवेदं यदनेन दूषितमपि मां भूषयसीति भावः। अत्र ललितो नायकः। शिष्यरतिभावो रसः। उपमालंकारः॥

ततः पुनरपि खलमेव निन्दन्ध्वनितस्तमेव नरपतिसुतं स गुरुः स्तौति—खल इत्यादित्रिभिः।

**खलः सज्जनकार्पासरक्षणैकहुताशनः।**
**परदुःखाग्निशमनो मारुतः केन वर्ण्यताम् ॥ ८६ ॥**

सज्जनेति। सज्जना एव कार्पासाः शुद्धत्वमृदुत्वादिसाधर्म्यात्तूलविशेषास्तेषां यद्रक्षणं विरोधिलक्षणया भक्षणं तत्रैकहुताशनो मुख्योऽग्निरित्यर्थः। एतादृशः साधुबाधकः खल एको निर्णीत इत्यर्थः। परेति। परेषां यानि दुःखानि तान्येवाग्निस्तं शमयति पूर्ववद्विरोधिलक्षणयैव दीपयतीति तथा। एतादृशो मारुतो वायुः परदुःखसंवर्धकः पुरुषः केन वर्ण्यताम्। न केनापीत्यर्थः। तस्य खलापेक्षयापि विचित्रदौष्ट्यादसाववाच्य एवेति भावः। अत्र दुःशठो नायकः। करुणो रसः। रूपकविशेषोऽलंकारः॥

**परगुह्यगुप्तिनिपुणं गुणमयमखिलैः समीहितं नितराम्।**
**ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः ॥ ८७ ॥**

परगुह्येति। खला दुष्टा आखव इव मूषिका इव। ललिताम्बरमिव रम्यवसनमिव। परेति। परेषामन्येषां यद्गुह्यं गोप्यं धनादि, पक्षे मेढ्रादि, तस्य या गुप्तिर्गोपनं तत्र निपुणम्। प्रवीणमित्यर्थः। कुत इत्यत्राह—गुणेति। शान्त्यादिगुणप्रचुरम्। पक्षे सूत्रविकारीभूतम्। अत एवाखिलैः सर्वैर्लोकैर्नितरां समीहितम्। समभिलषितमिति यावत्। एतादृशं सज्जनं दूषयन्त्यारोपितदोषयुक्तं कुर्वन्ति। पक्षे खण्डयन्तीत्यन्वयः। एते यद्यपि तथा वर्तन्ते तथापि त्वं तु नैवमसीत्याशयः। अत्र नायकादिकं तूक्तमेव। उपमालंकारः॥

**यशःसौरभ्यलशुनः शान्तिशैत्यहुताशनः।**
**कारुण्यकुसुमाकाशः खलः सज्जनदुःखलः ॥ ८८ ॥**

यश इति। यश एव सौरभ्यं सौगन्ध्यं तस्य लशुन इव लशुनः। स यथा कालत्रयेऽपि

सौरभ्यानुत्पत्तिस्थानमेव तद्धृदयं स्वप्नेऽपि यशोनुत्पत्तिहेतुरेवेत्यर्थः। मास्तु यशः, शमश्चेदलम्। उक्तं हि वासिष्ठे—'तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च। बलवत्सु गुणाढ्येषु शमवानेव राजते॥' इति। तत्राह—शान्तीति। शान्तिरेव शैत्यं तस्य हुताशन इवानुत्पत्तिस्थानत्वाद्धुताशनोऽग्निरित्यर्थः। अथापि दया चेदुभयमप्येतद्भविष्यति। अत एवोक्तम्—'वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः। करणं परोपकरणं येषां केषां न ते वन्द्याः॥' इति। तत्राह—कारुण्येति। कारुण्यमेव कुसुमं तस्याकाश इवानुत्पत्तिहेतुत्वादाकाश इत्यर्थः। एतादृशः खलः। अत एव—सज्जनेति। सज्जनानां यद्दुःखं तद्बलात्यादत्ते संपादयतीति तथा। साधुदुःखजनक इत्यर्थः। 'दुःखदः' इति पाठस्तु सरल एव। त्वं तु सज्जनसुखद एवेति भावः। अत्र रूपकलुप्तोपमा विशेषावलंकारौ। शेषं तु प्राग्वदेव॥

एवं स राजकुमारः खलनिन्दामाकर्ण्य ततः परमक्षुब्धं श्रीगुरुमालक्ष्य 'गुरुं प्रणतिभिः' इति न्यायादुक्तनिन्दाप्रधानपद्यत्रयद्योतितस्वस्तुतितः प्रचुरप्रमुदितः संस्तं वृक्षान्योक्त्या प्रणमति—

**धत्ते भरं कुसुमपत्रफलावलीनां**
**घर्मव्यथां वहति शीतभवां रुजं च।**
**यो देहमर्पयति चान्यसुखस्य हेतो-**
**स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु॥ ८९॥**

धत्ते भरमिति। यो वक्ष्यमाणगुणगणस्तरुवरः। कुसुमेति। भरं भारम्। अन्यसुखस्य हेतोरितरानन्दकरणार्थमित्यर्थः। न हि तेन तस्य किंचिद्धितम्। धत्ते धरति। तथा घर्मव्यथामातपपीडां शीतभवां हिमसंभवां रुजं पीडां च वहति। इदं वृष्ट्यादेरप्युपलक्षणम्। किं बहुना, देहमप्यर्पयति। इन्धनाद्यर्थिभ्य इत्यर्थः। तस्मायित्यादि यथाश्रुतमेव योज्यम्। वदान्येति। अनेनैतादृशो दातृशिरोमणिस्त्वमेव, अहं तु वदान्याभास एवेति भावः। अत्र चरणत्रयेण क्रमेण विद्यासंभारसंभरणश्रमशालित्वं खलपीडासहिष्णुत्वं प्राणप्रायब्रह्मविद्याप्रदातृत्वं चेति वदान्यगुरुत्वे हेतवो द्योतिताः। नमनेन च तत एव सर्ववन्द्यत्वं व्यज्यते। इहोदात्तो नायकः। दानवीरो भक्तिश्च रसः। काव्यलिङ्गमलंकारः॥

अथायं निरुक्तापराधी तटस्थादिरपि मूढजनः श्रीमद्भिः करुणयानुग्राह्य एवेति श्रीगुरुं प्रार्थयन्राजकुमारस्तेन प्रबोध्यते—

**हालाहलं खलु पिपासति कौतुकेन**
**कालानलं परिचुचुम्बिषति प्रकामम्।**
**व्यालाधिपं च यतते परिरब्धुमद्धा**
**यो दुर्जनं वशयितुं तनुते मनीषाम्॥ ९०॥**

हालाहलमिति । यो दुर्जनं वशयितुं मनीषां 'बुद्धिर्मनीषा' इत्यमरात्तद्वृत्तिविशेषरूपामिच्छामित्यर्थः । तनुते विस्तारयति । स हालाहलम्, न तु जलम् । तत्रापि कौतुकेन, न तु मृतीच्छया । खलु निश्चितम् । विषमेवेत्यर्थः । पिपासति पानकर्मीकर्तुमिच्छति । तथा । कालेति । प्रलयकालीनवह्निम्, न तु सामान्याग्निम् । तत्रापि प्रकाममत्युत्कटम्, न तु यत्किंचित् । तत्रापि परिचुचुम्बिषति भूयोऽपि समन्तादपि वक्त्रसंयुक्तीकर्तुमिच्छति । न केवलमेतावदेव, किं तु—व्यालेति । सर्पराजं तक्षकमपि । तत्राप्यद्धा साक्षादव्यवहितम् । तत्रापि परिरब्धुम्, न तु द्रष्टुम् । यतते प्रयत्नं करोतीत्यन्वयः । तस्मादिदं दुर्घटमेवेति भावः । इह मूर्खो नायकः । औदासीन्यध्वनितः शान्तो रसः । दृष्टान्तविशेषोऽलंकारः ॥

ततः स तटस्थोऽपि स्वदोषमवधार्यानुतप्तस्तं पण्डितं व्याजनिन्दाघटिताप्रस्तुतप्रशंसालंकारेण पण्डितवरंमन्य इवोपालभते—

**दीनानामिह परिहाय शुष्कसस्या-**
**न्यौदार्यं प्रकटयतो महीधरेषु ।**
**औन्नत्यं विपुलमवाप्य दुर्मदस्य**
**ज्ञातोऽयं जलधर तावको विवेकः ॥ ९१ ॥**

दीनानामिति । हे जलधर, तावकस्त्वदीयः । अयं प्रत्यक्षः । विवेको विचारः । इह लोके दीनानामनन्यगतीनां कृषीवलानाम् । एतेनावश्यानुकम्पनीयत्वं व्यज्यते । तत्रापि । शुष्केति । शुष्कधान्यानि । एवं च तत्पुष्ट्यभावे तेषां मृत्युरेव स्यादिति द्रुतपरितर्पणीयत्वमावेद्यते । परिहाय त्यक्त्वा । महीति । पर्वतेष्वित्यर्थः । औदार्यं वृष्टिपुष्ट्या वदान्यत्वमिति यावत् । प्रकटयतः स्फुटीकुर्वतः । एतेनोपहासः सूचितः । एतादृशस्य दुर्मदस्य दुष्टश्चासौ मदश्चेति तथा । उन्मादस्येत्यर्थः । विपुलं प्रचुरमौन्नत्यमौत्कट्यमवाप्य प्राप्य । ज्ञातः 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमराद्विख्यातोऽस्तीति संबन्धः । तस्मान्मादृशा दीनास्त्वयानुकम्पनीया एवेत्याशयः । इहाविवेकी नायकः । करुणो रसः । अलंकारस्तूक्त एव ॥

ततः स राजपुत्रः पण्डितस्य सान्त्वनं ध्वनयन्ननुग्रहाभ्यर्थनमपि सूचयन्सामान्यतो महाधियामेव गुरुत्वं यावद्गुरुतरेभ्य इति स्पष्टयति—

**गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् ।**
**तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ९२ ॥**

गिरय इति । गुरवो महान्तः । उर्वी पृथ्वी । जगदण्डं ब्रह्माण्डम् । प्रलय इत्याद्यतिगुरुत्वे हेतुगर्भं विशेषणम् । अचलत्वमत्र क्षोभशून्यत्वम् । उक्तं हि योगवासिष्ठे—'अपि स्फुटति विन्ध्याद्रौ वाति वा प्रलयानिले । गुरुशास्त्रानुगो मार्गः परित्याज्यो न धीमता ॥' इति, 'विचारदर्पणे लग्नां धियं धैर्यधुरं गताम् । आधयो न विलुम्पन्ति वाताश्चित्रानलं यथा ॥'

इति, 'नापदि ग्लानिमायान्ति हेमपद्मं यथा निशि' इत्यादि च । तस्माच्छ्रीमद्भिरस्मदादीनां सर्वानप्यपराधान्सोढ्वास्मदादयः सर्वेऽपि खलाः समनुग्राह्या एवेति भावः । अत्र धीरो नायकः । गुरुरतिर्भावः । सारोऽलंकारः । तदुक्तं कुवलयानन्दकारिकासु—'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते । मधुरं मधु तस्माच्च सुधा तस्याः कवेर्वचः ॥' इति ॥

पुनरपि श्रीगुरुरिदं दुर्घटमेवेति मन्वानः खलनिन्दां व्यनक्ति—

**व्योमनि वासं कुरुते चित्रं निर्माति यत्नतः सलिले ।**
**स्नपयति पवनं सलिलैर्यः क्षुद्रे चरति सत्कारम् ॥ ९३ ॥**

व्योमनीति । यः क्षुद्रे 'क्षुद्रे स्तोकाल्पक्षुल्लका' इत्यमरादल्प इति यावत् । 'यस्तु खले इति पाठः साधुः । सत्कारं सत्करणं सत्कारः साधुतां नयनमित्यर्थः । स व्योमन्याकाशे वासं वसतिम् । 'व्योमनि शम्बाम्' इति पाठे शम्बां क्षेत्रभक्तिम् । कृषिविभागमिति यावत् । कुरुते । तथा सलिले चित्रं यत्नतो निर्माति । तथा पवनं सलिलैः स्नपयतीति संबन्धः । एवं चैतत्त्रयं यथा कालत्रयेऽप्यघटमानं तथा क्षुद्रस्य साधुत्वापादनमपीति तात्पर्यम् । अत्र दुःशठो नायकः । शान्त एव रसः । दृष्टान्तविशेषोऽलंकारः ॥

न केवलं मूर्खस्य साधुत्वापादने यत्नवैफल्यमेव प्रत्युत तत्कृतस्ववचनानादरवशान्मानहानिरपि । ततः 'सतां माने म्लाने मरणमथ वा दूरगमनम्' इति न्यायेन मृत्युसमकक्षदुःखापत्तिरिति स एव पण्डितो मर्कटान्योक्त्या व्यनक्ति—

**हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।**
**लेढि जिघ्रति संक्षिप्य करोत्युन्नतमासनम् ॥ ९४ ॥**

हारमिति । लेढ्यास्वादयति । जिघ्रति गन्धग्रहणविषयीकरोति । संक्षिप्याधस्त्यक्त्वा । उन्नतमुच्चमासनं करोतीति स्पष्टमेव । तस्मादनुचितमेव मूर्खसाधुत्वापादनयतनमिति हृदयम् । इह नायकाद्युक्तमेव । अप्रस्तुतनिन्दालंकारः ॥

एवं मूर्खनिर्भत्सनं भूयः समाकर्ण्य स राजकुमारस्तावत् 'अनृतं साहसं माया मूर्खत्वमतिलोभिता । अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥' इति वचनात्स्वकीयरमण्यामपि स्त्रीत्वेन तदवधार्य तज्जिहासुरभूदिति तदिङ्गितैः स पण्डितो निर्णीयाध्यवसिततत्पातित्रत्यस्त्वया स्वरमण्यौदासीन्यं नैव विधेयमिति भ्रमरान्योक्त्या व्यनक्ति—

**मलिनेऽपि रागपूर्णां विकसितवदनाममन्दजल्पेऽपि ।**
**त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ९५**

मलिनेऽपीति । रागपूर्णां रागबाहुल्यवतीमित्यर्थः । पक्षे नायके दुःसङ्गक्रौर्यस्वैरत्वैर्मालिन्यबहुभाषित्वचापल्यानि । नायिकायां तु रागः प्रेमा । 'अनल्पजल्पेऽपि' इति पाठः । शिष्टं तु स्पष्टमेव । तस्मान्नेयं सर्वगुणरमणीया रमणी हेयेत्याशयः । अत्र सरोजिनीपदेन तस्यां पद्मिनीत्वं ध्वन्यते । इहाविवेकी नायकः । करुणो रसः । निरुक्त एवालंकारः ॥

अथ तत्रैवावस्थितः प्रागुक्तः कश्चित्तटस्थः स्वमनसि यदयं पण्डितवरस्तावदिमं राजतनूजं स्वसुन्दरीत्यागानौचित्योपदेशान्यथानुपपत्त्या प्रागुक्तरीत्या चतुर्वर्गोपदिदिक्षुरपि नास्मान्प्रति करुणालेशेनेषदप्यनुगृह्णात्यतो धिङ्मामिति परमविषण्णस्तेनानुकम्पया किमिति त्वं खिन्नोऽसीति पृष्टस्तदपलाप्यानुतापवशात्सत्त्वप्रधानचेताः सन्धनलोभलक्षणं स्वापराधमेव तत्र हेतुं द्योतयन्सामान्यतः स्वार्थे परार्थे वा धनार्थित्वावच्छेदेन मुखमालिन्यव्याप्तिं स्पष्टयति—

**स्वार्थं धनानि धनिकात्प्रतिगृह्णतोऽपि**
**स्वास्यं भजेन्मलिनतां किमिदं विचित्रम् ।**
**गृह्णन्परार्थमपि वारिनिधेः पयोऽपि**
**मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ९६ ॥**

स्वार्थमिति । प्रतिगृह्णतोऽपि, न तु स्तेयादिना हरतः । स्वास्यं स्वस्य प्रतिग्रहीतुरस्मदादेरास्यं वदनमित्यर्थः । शोभनं मुखं वा । 'यदास्यम्' इति पाठे तु यत्पदमिदमासंबध्यते । ननु कुतो नेदं विचित्रं प्रत्युत धनलाभजन्यसंतोषात्प्रसादितैव भाव्यमित्याशङ्क्य कैमुतिकन्यायेन समादधत्तत्रार्थान्तरन्यासमुपन्यसति—गृह्णन्नित्युत्तरार्धेन । सकलोऽपि संपूर्णोऽपि, न त्वेकदेश एव । अयं बुद्धिस्थः सर्वलोकप्रत्यक्षो वा । मेघः परार्थमपि, न तु स्वार्थम् । वारिनिधेः सकाशात्पयोऽपि जलमपि । तेनास्य तुच्छत्वं व्यज्यते । गृह्णन्कालिमानं कार्ष्ण्यमेतीति योजना । तस्माद्धिग्धनयाचनमित्याकूतम् । अत्रोदासीनो नायकः । शान्तो रसः । काव्यार्थापत्त्यनुप्राणितोऽर्थान्तरन्यासोऽलंकारः ॥

एवं समनुतप्तं तं तटस्थमालक्ष्यानुजिघृक्षुः स पण्डितस्तं नृपकुमारोपहारार्थं केनचिदानीतमलयजेक्षणप्रसक्तया चन्दनान्योक्त्या स्तुत्या मण्डयति—

**जनकः स्थाणुविशेषो जातिः काष्ठं भुजंगमैः सङ्गः ।**
**स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम् ॥ ९७ ॥**

जनक इति । स्थाणुविशेषः 'स्थाणुः कीले स्थिरे हरे' इति विश्वात्स्थिरत्वोपलक्षितो मलयाचल इत्यर्थः । 'सानुविशेषः' इति पाठे 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरात्प्रस्थविशेषः । एतेन कुलौन्नत्यराहित्यं व्यज्यते । अस्त्वेवमथापि जात्या हीरकादिवदौन्नत्यं स्यादित्यत आह—जातिरिति । काष्ठम् । एतेन दहनेतरानुपयोगित्वं ध्वन्यते । एवमपि स्वात्युदकवत्सङ्गविशेषेण तत्स्यादित्यत्राह—भुजंगमैरिति । हे पटीरज मलयज । चन्दनेत्यर्थः । एवं च प्राक्प्रतिज्ञाते जनक इत्यादौ हेतुर्द्योतितः । त्वं तथापि कुलजातिसङ्गसौष्ठवाभावे सत्यपीत्यर्थः । स्वेति । नैजसौरभ्यादिधर्मैरेवेत्यर्थः । एवं च गुणानामगणितत्वं महत्त्वसाधकसामग्र्यन्तरविरहितत्वं च सूचितम् । महिमानं देवसेव्यत्वादिलक्षणमौत्कर्ष्यम् । यातोऽसि प्राप्तोऽसीत्यन्वयः । न चेदं मलयस्य न वा काष्ठत्वजातेरपि माहात्म्यं यच्चन्दने

सुरसेव्यत्वम्, किं तु तस्य नैसर्गिकसौरभ्यप्रभाव एव । तद्वद्भवतोऽप्ययं स्वाभाविक एवायं सत्त्वोदय इत्याशयः । अत्र ललितो नायकः । शिष्यरतिर्भावः । प्रस्तुताङ्कुरोऽलंकारः ॥

ततस्तं तटस्थं स एव पण्डितः प्रश्नोत्तरसरण्या संजातानुतापत्वेन राजतनूजापेक्षयापि मोक्षसाम्राज्यलक्ष्मीप्रासादे द्रुतमारुरुक्षुमालक्ष्य सर्वोपदेशरहस्यं विषयसुखोपलक्षितं यावद्द्वैतत्यागमेव संक्षिपति—

**कस्मै हन्त फलाय सज्जन गुणग्रामार्जने सज्जसि**
**स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय ।**
**ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृता-**
**स्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्तनम् ॥ ९८ ॥**

कस्मा इति । हे सज्जन, त्वं हन्त सखेदं कस्मै फलाय । गुणेति । वाग्मित्वादिचारुधर्मसंघसंपादन इत्यर्थः । सज्जसि । संसक्तो भवसीति यावत् । स्वान्तःकरणादेः सत्संस्कारसंपादनार्थं सद्गुणगणसंग्रहे किमिति न यतितव्यमित्याशङ्क्य समाधातुमवधानप्रदानं बोधयति—स्वात्मेति । स्वात्मनो निजान्तःकरणादेरुपस्करणं संस्करणं तस्मा इत्यर्थः । किमिति त्वद्वचः समाकर्णनीयमित्यतस्तत्र हेतुगर्भं विशेषणम्—पथ्यमिति । परिणामहितमित्यर्थः । एवं चास्य प्रथममप्रियत्वेऽप्यनादरणानर्हत्वं ध्वन्यते । 'सम्'पदेनावधानश्रद्धाधिक्यापेक्षा व्यज्यते । किं तदित्यत्राह—य इत्युत्तरार्धेन । ये भावा अनल्पपदार्थाः । नितरां शोभाभरैः संभृताः परिपुष्टाः । अत एव हृदयं मनः । नितरामिति काकाक्षिगोलकन्यायेनोभयत्रान्वेति । हरन्ति वशीकुर्वन्ति । तैरेव प्रागुक्तरम्यानल्पपदार्थैरेव न त्वन्यैः । अस्य साक्षिप्रत्यक्षस्य । कलेवरेति । कलेवरं शरीरं पुष्णातीति तथैतादृशस्य कलेः कलियुगाख्यस्य । वर्तमानकालस्येत्यर्थः । दैनंदिनं दिने दिने भवं दैनंदिनम् । प्रतिदिवससंभवमिति यावत् । वर्तनम् । जीवननिर्वहणमित्यर्थः । अस्तीति शेषः । कलियुगेऽस्मिन्प्रायशो रम्यपदार्थानामेव प्रतिदिवसं भूरिक्षयो भवतीत्यतो धिग्देहादिरम्यतासंपादकगुणगणासादनमिति हृदयम् । अत्र सज्जनेत्युपदेशार्हत्वं व्यज्यते । इहोदासीनो नायकः । शान्तो रसः । आक्षेपोऽलंकारः ॥

एवं यावद्रम्यस्याशुविनाशित्वमाकर्ण्य स तटस्थः श्रीगुरुविरहेण निरुक्तनरवरकुमारस्य दुरवस्थाकथनच्छलेनोभयोरपि तच्चरणकमलयुग्मे रतिमात्रान्योक्त्या व्यनक्ति—

**धूमायिता दश दिशो ललितारविन्दा**
**देहं दहन्ति दहना इव गन्धवाहाः ।**
**त्वामन्तरेण मृदुजालकलाम्र मञ्जु-**
**गुञ्जन्मधुव्रतमथो किल कोकिलस्य ॥ ९९ ॥**

धूमायिता इति । हे मृद्विति । मृदु कोमलमेतादृशं यज्जालकं कलिकाजालं तल्लाति

आदत्त इति तथा । एतादृश भो आम्र । अथोऽनन्तरं त्वामन्तरेण भवन्तं विना कोकिलस्य । ललितेति । ललितानि फुल्लत्वादिना सुन्दराण्यरविन्दानि महोत्पलानि यासु ताः । एतादृशो दशदिशोऽपि । यद्यप्यूर्ध्वाधोदिशोर्नारविन्दसंभावना तथापि ब्रह्मलोकनागलोकयोस्तद्वर्णनायुक्तैव सा । धूमेति । धूम इव आचरिताः । सधूमा इत्यर्थः । तथा गन्धवाहाः सुरभिवायवो दहना इवाग्नय इव । देहं दहन्ति किलेति संबन्धः । कुत इत्यत आह—मञ्जिति । कीदृशं त्वाम् । मञ्जुलध्वनन्मधुकरमित्यर्थः । अत्र 'दलितारविन्दाः' इति 'मृदुताम्रदलाम्र मञ्जुगुञ्जन्मधुव्रत मधौ' इति च पाठस्तु समीचीनः । तत्र दलितपदं विकसितपरम् । एवं मृदून्यत एव ताम्राणि दलानि पत्त्राणि यस्य तत्संबुद्धौ । अत एव मञ्जिति । एतादृश हे आम्र, त्वामन्तरेण त्वां विना मधौ वसन्ते कोकिलस्येत्यादि योज्यम् । तस्मात्त्वद्वियोगो मैवास्त्विति रहस्यम् । इह विषादी नायकः । करुणो रसः । गुरुरतिर्भावश्च । अप्रस्तुतप्रशंसालंकारः ॥

अथैवं स नरवरकुमारोऽपि निजक्षात्रनिसर्गसिद्धशौर्यस्यापि 'जहि शत्रुं महाबाहो कामरूपं दुरासदम्' इति श्रीमद्भगवद्गीतावचनात्, 'कः शूरो यो ललनालोचनबाणैर्न विव्यथितः' इति श्रीमद्विमलाचार्यचरणकमलीयप्रश्नोत्तररत्नमालोक्तेश्चान्तःशत्रुभूतकामाद्यासुरवृत्तिविजयमन्तरा वैयर्थ्यमेवेति प्रपूर्वं पद्यध्वनितयावद्रम्यविनश्वरत्वाकर्णनजन्यनिजनिर्वेदं सिंहान्योक्त्या श्रीगुरुं प्रति द्योतयति—

> **भिन्ना महागिरिशिलाः करजाग्रजाग्र-**
> **उद्दामशौर्यनिकरैः करटिभ्रमेण ।**
> **दैवे पराचि करिणामरिणा तथापि**
> **कुत्रापि नापि खलु हा पिशितस्य लेशः ॥ १०० ॥**

भिन्नेति । करिणां गजानामरिणा शत्रुणा सिंहेन । अत एव यद्यपि दैवेऽदृष्टे पराचि पराङ्मुखे सति करटिभ्रमेण 'काकेभगण्डौ करटौ' इत्यमरात्, 'करटः करिगण्डे स्यात्कुसुम्भे निन्द्यजीवने । काके वाद्ये दुर्दुरूढे नवश्राद्धे' इति हैमाच्च करटशब्दितगण्डपिण्डद्वन्द्वशाली करटी । गजेन्द्र इति यावत् । तद्भ्रमेण स्थूलत्वनीलत्वादिसाधर्म्याद्गजेन्द्रभ्रान्त्येत्यर्थः । करजेति । करजा नखास्तेषां यान्यग्राणि तेषां ये जाग्रन्तोऽतन्द्राः । अत एव उद्दामा उत्कटा एतादृशा ये शौर्यनिकरा वीर्यसमूहास्तैरित्यर्थः । महागिरिशिला हा भिन्ना विदारिताः । हा इति खेदे । तथापि कुत्रापि पिशितस्य 'पिशितं तरसं मांसम्' इत्यमरान्मांसस्येत्यर्थः । लेशोऽपि स्वल्पांशोऽपि नापि खलु नैव लब्ध इति योजना । तस्माद्दुरदृष्टपुष्टमिथ्यादृष्टिवशादेव मयैते शत्रवः पराजिताः सर्वेऽपि । वास्तविकविजयस्तु तेभ्यः सकाशात्तेषामेवावास्तविकत्वात्क्वचिदपि देशे काले नैव लब्धः । अतः सर्वं परित्यज्यान्तःशत्रुविजयार्थमेवाहं यतिष्यामीत्याकूतम् । इह निर्विण्णो नायकः । वीरानुप्राणितः शान्तो रसः । उक्त एवालंकारः ॥

इदानीं कविर्नीत्युपदेशफलमन्तःशत्रुविजयार्थं सन्मार्गप्रयत्नलक्षणं धर्मं तत्सिद्ध्यर्थं दानाद्युपयोगिनं स्वस्वोचितगुणप्रावण्यैकसाध्यमर्थं च संपादयितुं शिष्यस्य संजातं विज्ञानं प्रारम्भवत्समाप्तावपि सिंहान्योक्त्यैव द्योतयति—

**गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि।**
**हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयतेऽतिभृशम्॥१०१॥**

## इति पण्डितराजश्रीजगन्नाथविरचिते भामिनीविलासे अन्योक्त्युल्लासः प्रथमः।

गर्जितमिति। हरीति। सिंहशिशुः। पक्षे श्रीकृष्णसुतः कामः। एतेन देवताविजयवर्णनलक्षणवस्तुनिर्देशलक्षणं मङ्गलमपि प्रकरणसमाप्तौ सूचितं भवति। तथोत्तरप्रकरणप्रतिबोध्यकामपुमर्थस्य सूत्रणमपि ध्वन्यते। निशेति। निशाया रात्रेरर्धं यामद्वयं तत्परिमितं जातं 'जातिर्जातं च' इत्यमरान्नात्युपलक्षितं वयो यस्य स तथा। तादृगपीत्यर्थः। यद्वा निशार्धे जातः। पक्षेऽङ्कुरितोऽपीति यावत्। मनागीषद्गर्जितं मेघध्वनितम्। तस्योद्दीपनविभावत्वात्। पक्षेऽप्येवमेव। मातुर्जनन्याः। पक्षे अमातुर्जीवस्य। अङ्क उत्सङ्गे। पक्षे मनोरूपैकदेशे। द्राक्शीघ्रमुत्पतितुम्। अतिभृशमत्यन्तम्। अङ्गान्यवयवान्। पक्षे मोहनादीनि साधनानि। आकुञ्च्य लीयत इत्यन्वयः। 'निभृतम्' इति पाठे तु निगूढमिति व्याख्येयम्। अत्र धीरो नायकः। वीरो रसः। श्लेषश्चालंकारः॥

## इति प्रणयप्रकाशे प्रथमः प्रमोदः।

## शृङ्गारोल्लासः ।

अथ श्रीगुरुस्तावदेवं नीत्युपदेशेन ससाधनौ धर्मार्थावुपबोध्याधुनावसरप्राप्तं ससाधनं काममपि शृङ्गारोल्लासेन समुपदेष्टुं सोऽपि श्रीरामवत्स्वकीयायामेव त्वया संपादनीयो न तु श्रीकृष्णवत्परकीयायामित्यन्वयव्यतिरेकनिदर्शनद्वयपरं प्रकरणमारभमाणः प्रथमं मङ्गलत्वेनादर्शदर्शनादिवच्छृङ्गाररसालम्बनीभूतनायिकावदनवर्णननिपुणं तां प्रति नायकवाक्यमुपन्यस्यति—

**न मनागपि राहुरोषशङ्का**
**न कलङ्कानुगमो न पाण्डुभावः ।**
**उपचीयत एव कापि शोभा**
**परितो भामिनि ते मुखस्य नित्यम् ॥ १ ॥**

न मनागपीति । इदं हि सीतां प्रति श्रीरामस्य राधां प्रति श्रीकृष्णस्य च वाक्यं तदाननसौन्दर्यमलौकिकतयावधार्य प्रसादातिरेकादेव तन्मानापनोदनफलकम् । न चैवं सारस्यानुसारेण विवेचनचतुराणां श्रीरामादिविलासपरत्वेन प्रकरणयोजनमयुक्तमेवेति सांप्रतं 'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः । संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः ॥' इति, 'लोभाद्वराटिकानां विक्रेतुं तक्रमक्रममटन्त्या । लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥' इत्यादौ च तत्र तत्र तल्लिङ्गस्य मध्ये स्फुटतरत्वात्कवेः स्वप्रेयसीवर्णने यथा कथंचित्तात्कालिकफलसंभवेऽपि पारत्रिकतदभावध्रौव्यात् । प्रत्युत 'न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् । तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्षया ॥' इति भगवद्गुणवर्णनहीनवाग्व्ययस्य निषिद्धत्वाच्च । न चैवं प्रथमोल्लासेऽपि शक्यं भगवदितरपरत्वेन निषेधसत्त्वम् । तस्य धर्मोपदेशध्वनकत्वेन भगवत्परत्वस्य परम्परया संभावितत्वेन तदभावात् । न चैवमत्रापि 'ऋतौ भार्यामुपेयात्' इति ब्रह्मचर्यमेव, 'तद्यद्रात्रौ रत्या संयुज्यन्ते' इति च श्रुतेः स्वकीयाविषयकस्य कामस्यापि धर्मत्वेन तत्तौल्यमेवेति वाच्यम् । तथात्वेऽर्थकामयोः पुरुषार्थत्वराहित्यापातात्तयोस्तदानुभविकत्वस्य सार्वलौकिकत्वेनेष्टापत्तौ तद्विरोधात् । उक्तश्रुतेस्तु परिसंख्याविधित्वेन स्वकीयेतरर्तुकालान्यकालनिवृत्तावेव तात्पर्येण तदनुकूलेन्द्रियनिरोधेन 'मनसश्चेन्द्रियाणां च एकाग्र्यं परमं तपः । तज्जायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥' इति स्मृतेः । संपद्यमानपरमधर्ममात्रपर्यवसन्नत्वेन यथाश्रुतार्थकत्वाभावाच्च । वस्तुतस्तु साध्यसाधनभेदेन पारत्रिकं धर्ममोक्षाख्यपुरुषार्थद्वयमेव । अर्थकामौ लैहिकावेव । तत्रापि साधनीभूतस्य धर्मस्य चित्तशुद्धेर्जनकत्वेन तद्द्वारा वैराग्यादिसाधनचतुष्टयपुष्टिपूर्वकश्रवणादिपरिपाकोत्तरं वेदान्तमहावाक्यजन्यब्रह्मात्मतत्वसाक्षात्कारव्यङ्ग्ये विशुद्धाद्वैतात्मरूपमोक्ष एव पर्यवसन्नत्वेनैक एव पुरुषार्थः । सर्वपुरुषैरर्थ्यमानस्य निःशेषदुःखध्वंसनिरतिशयसुखलाभस्य तत्रैव संभवात् । धर्मादित्रयाणां परस्परं साध्यसाधनभावसंभवेऽपि मुख्यपुमर्थत्वाभावात् । 'यत्सुखं

साधनाधीनं दुःखमेव तदुच्यते' इत्याद्यभियुक्तोक्त्यापि तथात्वाच्चेत्यन्यदेतत् । ननु निरुक्तश्रुतिवशादृतुकाल एव पाणिगृहीतायामेव कामोपभोगशीलस्यानुषङ्गिकोऽपि किं धर्मो न संभवत्येव । यदि संभवति चेदत्रापि परम्परया भगवत्तात्पर्यकत्वेन किमनया कुसृष्ट्येति चेत्सत्यम् । तथापि प्रथमप्रकरणापेक्षयात्र विक्षेपबाहुल्यस्य कोटिगुणमधिकतमत्वात्परकीयायामपि प्रसक्त्यापातात्क्व नाम धर्मोदयावकाशः । देवतापरत्वे त्वस्य तत्स्मरणादिनास्मच्छब्दस्थल आहार्यं तत्तादात्म्यस्य नटादाविव संभवेन च नायमनर्थः । प्रत्युत धर्माधिक्यसाधकत्वमेव । कामाख्यस्य व्यावहारिकपुरुषार्थस्यापि निरुक्तान्वयव्यतिरेकनिदर्शनेनाधिकारिणा स्वकीयायामेव साधयितुं शक्यत्वाच्च न काप्यनुपपत्तिः । अत एवोक्तं भगवतापि—'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति । नन्वथापि 'रम्या दशा मनसि मे मदिरेक्षणायाः' इति तृतीयपद्यादावस्मिन्नुल्लासे कवेः शतशोऽप्यस्मच्छब्दस्य सत्त्वात्तथा तृतीये करुणोल्लासेऽपि द्वितीयपद्ये 'मामद्य मञ्जुरचनैर्वचनैश्च बाले हा लेशतोऽपि न कथं शिशिरीकरोषि' इति, तथा 'सा केवलं हरिणशावकलोचना मे' इत्यादि तृतीयपद्यादावपि भूरिशस्तस्य स्फुटत्वाच्चतुर्थे शान्त्युल्लासेऽपि प्रथमश्लोक एव 'विशालविषयावलीवलयलग्नदावानलप्रसृत्वरशिखावलीविकलितं मदीयं मनः' इत्यत्र, तथा 'शिशिरयाशु मां लोचनैः' इत्यादौ द्वितीयपद्यादावपि तस्य स्पष्टतमत्वाच्च यस्य पूर्वं रमण्यामत्यनुरागस्तस्यैव तन्निधने शोकस्ततस्तस्यैवौदासीन्ये भगवत्प्रार्थनमित्यवश्यमेकवक्तृकत्वे वाच्ये 'संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इति न्यायात्संपद्यमानायामेकवाक्यतायां कथमत्रत्यास्मच्छब्दस्य रामादिपरतया तृतीयगस्यापि तस्य श्रीराममात्रपरतया चतुर्थस्थस्यैव तस्य कव्येकपरतया व्याख्यानेन वाक्यभेदाङ्गीकरणं शब्दार्थपरीक्षणनिपुणानामादरणीयं स्यात् । तस्माद्यथाश्रुतैवेयमुल्लासत्रयी व्याख्येयेति चेद्बाढम् । किमत्र कवेर्निजधर्मपत्न्येव वर्णनीयत्वेनाभिमतेति ब्रूषे । यद्वा या लोकप्रसिद्धा 'यवनी नवनीतकोमलाङ्गी शयनीये यदि नीयते कदाचित् । अवनीतलमेव साधु मन्ये न वनी माघवनी विनोदहेतुः ॥' इति सुप्रसिद्धैतदीयपद्यसिद्धा यवनविशेषस्य कस्यचित्पृथ्वीपतेर्दुहिता । आद्ये श्रीमद्गङ्गाप्रसादासादितसूरिवरत्वोत्तरमिन्द्रप्रस्थे पृथ्वीपतिं प्रत्युपेत्य 'शीतार्ता इव संकुचन्ति दिवसा नैवाम्बरं शर्वरी शीघ्रं मुञ्चति किं च सोऽपि हुतभुक्कोणं गतो भास्करः । त्वं चानङ्गहुताशभाजि हृदये सीमन्तिनीनां गतो नास्माकं वसनं न वा युवतयः कुत्र व्रजामो वयम् ॥' इति श्लोकेन स्ववृत्तविनिवेदनं यदनेन कविना कृतमिति वृद्धपरम्परोदन्तसुप्रसिद्धमेव । तत्र स्वपत्न्यभावस्य व्यक्ततरत्वादसंभव एव । तदूर्ध्वं तु निरुक्तयवन्या एव श्रीमद्गङ्गाप्रसादमदेनाङ्गीकारात्क्व नाम धर्मपत्नीसंभवः । यतस्तदर्थमेव काश्यां सर्वविप्रैर्बहिष्कारे कृते ततः पावनतायै पूर्वतपोवशीकृतां श्रीगङ्गामेव पीयूषलहरीनाम्ना 'समृद्धं सौभाग्यं सकलवसुधायाः किमपि तत्' इत्यादिद्विपञ्चाशत्पद्यात्मना गङ्गास्तवेनाभिनवेन तां स्तुत्वा प्रतिश्लोकमेकैकसोपानं जलेनातिक्रामन्त्या तयासावभिक्षालित इत्यपि वृद्धप्रसिद्ध्यैव सिद्धम् । अन्त्ये तु 'प्रातस्तरां प्रणमने विहिते गुरूणामाकर्ण्य वाचममलां भव पुत्रिणीति' इति षष्ठपद्ये नायिकायां प्रातःकालिकश्वशुरादिगुरुकर्मकनमस्करणस्य तत्कर्तृकनिरुक्ताशीर्वादप्रदानस्य च, तथा 'आगतः पतिरितीरितं

जनैः शृण्वती चकितमेत्य देहलीम्' इति चतुर्दशपद्ये पाणिग्रहीतृवाचकपतिशब्दप्रयोगस्य, तथा तृतीयप्रकरणे 'धृत्वा पदस्खलनभीतिवशात्करं मे यारूढवत्यसि शिलाशकलं विवाहे' इति पञ्चमपद्ये विवाहोक्तशिलाधिरोहणस्य, तथा 'स्वप्नान्तरेऽपि खलु भामिनि पत्युरन्यं या दृष्टवत्यसि न कंचन साभिलाषम्' इति सप्तदशपद्येऽपि पतिपदप्रयोगस्य च स्वधर्मपत्नीलिङ्गस्य का गतिरिति भवतैव परिचिन्तनीयम् । यदि लोकप्रसिद्ध्यादिकं सर्वमिदमलीकमेवेति का-मुकैककैवल्यवादिनस्तवाग्रहस्तदापि करुणोल्लासे यथा मध्ये क्वचिदप्यालम्बनान्तरं नैवाक-रोत्तथैवात्रापि कामिन्येकवर्णनेन भाव्यम् । प्रकरणभङ्गस्योभयत्रापि तुल्यत्वात्तत्तु नास्त्येव । 'यौवनोद्गमनितान्तशङ्किताः' इति, 'अधिरोप्य हरस्य हन्त चापम्' इति च पञ्चत्रिंशत्षट्त्रिं-शत्पद्ययोः श्रीरामपरत्वात् । तथा 'लोभाद्वराटिकानाम्' इति चत्वारिंशत्पद्यस्य 'रूपारु-चिम्' इत्येकचत्वारिंशत्पद्यस्य च श्रीकृष्णपरत्वात् । एवं 'आविर्भूता यदवधि' इति, 'प्र-सङ्गे गोपानाम्' इति च त्रिषष्टिचतुःषष्टिश्लोकयोरपि तत्परत्वात्, एवं 'व्यत्यस्तं लपति क्षणम्' इति वैदेह्यालम्बनकरावणदुरनुरागवर्णनघटितस्यैकोनसप्ततिश्लोकस्य तात्पर्यतः सीतासौन्दर्य-ध्वननद्वारा श्रीरामपरत्वात् । एवं 'मथुरागमनोन्मुखे मुरारौ' इति त्र्यशीतितमपद्यस्य श्रीकृष्णपरत्वात् । तथा 'पाणौ कृतः पाणिरिलासुतायाः' इति षडशीतितमपद्यस्य श्री-रामपरत्वात् । तथा 'परपुरुषदृष्टिपातवज्रा' इति नवतितमपद्यस्याऽपि तत्परत्वात् । एवं 'चेलाञ्चलेनाननशीतररिमम्' इति सप्तनवतितमश्लोकस्य श्रीकृष्णपरत्वाच्च । यदि स्वल्पानीमानि वचनान्येव बहुतरवचनवर्ण्यरमणीपरतया नेतव्यानीति मनुषे तर्हि स्वल्पानि वेदान्तवाक्यान्येव बहुतमवाक्यप्रतिपाद्यधर्मपरतयैव नेतुमुचितानि स्युरिति जितं पूर्वमीमांसकैः । एतेन 'त्यजेदेकं कुलस्यार्थे' इति न्यायः प्रत्युक्तः । तस्य समानयोग्यता-कस्यैकस्य समानयोग्यताकानां कुलस्य रक्षणार्थं त्याज्यत्वविधानमित्यर्थकत्वात् । न चास्तु निरुक्तयुवत्येव प्रकृते वर्ण्या, पूर्वोक्तधर्मपत्नीलिङ्गानि तु यथाकथंचिद्गुणवृत्त्या 'सिंहो माण-वकः' इत्यादिवदाहार्यज्ञानेन वा 'चिन्तामणिरेवायं कुमारः' इत्यादिवद्योज्यानि । तथेमानि श्रीरामादिपराण्यपि पद्यान्यप्राकरणिकान्यपि शास्त्रादिसंस्कारवशात्स्वपावनत्वार्थं तेन विनिर्मितानीत्येव विज्ञेयमिति वाच्यम् । अहो परीक्षकत्वमायुष्मतः किं वर्णनीयम् । यद्य-वनीवर्णनपर्यवसन्नतायै धर्मपत्नी लिङ्गकानि भगवद्वर्णनपराणि च वाक्यानि प्रकरणभेद-कान्यपि यथाकथंचिद्योजयसीति बालैरप्युपहास्यत्वापत्तेः । किं च यद्येतस्य कवेरेवमेवाशयः स्यात्तदात्रत्यमेव पद्यमस्मच्छब्दघटितमनेन कविना स्वकृते रसगङ्गाधरे समुदाहृत्य यद्व्याख्यातं तात्पर्यतस्तत्रास्मच्छब्दः किमित्यप्रयुक्तः स्यात् । तथा च रसगङ्गाधर उत्तमोत्तमकाव्योदा-हरणप्रस्तावे 'यथा वा—गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम् । दरकुण्डल-ताण्डवं नतभ्रूलतिकं मामवलोक्य घूर्णितासीत् ॥' अत्र घूर्णितासीदित्यनेन 'असमीक्ष्यकारिन्, किमिदमनुचितं कृतवानसि' इत्यर्थसंवलितोऽमर्षश्चर्वणाविश्रान्तिधामत्वात्प्राधान्येन व्यज्य-ते। तत्र 'शब्दोऽर्थश्च गुणः' इत्युक्तम् । इहोदाहरणवर्ण्यनायकस्यैवोदाहर्तृत्वात् 'असमीक्ष्य-कारिन्, किमिदमनुचितं कृतवानसि' इत्यर्थसंवलितो मां प्रत्यमर्ष इत्येवोक्तं स्यात् । न स्याच्च तदा निरुक्तरीत्या श्रीरामादिपरताप्यस्य । तस्मात्तदभावादापातदर्शनमात्रेण विपरीतार्थ-

भानेऽपि वस्तुगत्येदं श्रीरामादिपरतयैव व्याख्यातुमुचितमिति प्रतिभाति । न चास्मच्छ-ब्दवैयधिकरण्यमसांप्रतमिति वाच्यम् । सामानाधिकरण्येन संपद्यमानैकवाक्यतापेक्षयापि तस्याधिकतमरसपरिपोषत्वेन प्रकरणभेदेन चेष्टत्वात् । तथाहि । शृङ्गारोल्लासेऽत्र तावत्स्वध-र्मपत्न्याः पूर्वोक्तयवन्या वानेन कविना वर्णने कृते तदुत्तरं करुणोल्लासे तन्निधनवशात्तदव-लम्बनेन प्राक्तनानुरागौत्कण्ठ्यात्स्वस्य शोकोत्कर्षेऽपि वर्णिते ततोऽनुतापोदितनिरतिशय-निर्वेदान्निजस्यौदासीन्येऽपि शान्त्युल्लासे प्रपञ्चिते यावान्रत्यविकासस्ततोऽपि प्रथमोल्लासे नीतिवर्णनध्वनितससाधनधर्मार्थोपदेशसिद्धौ प्रसङ्गात्कामोऽपि श्रीरामवत्स्वकीयायामेव साधनीयो न तु श्रीकृष्णवत्परकीयायामपि तस्येश्वरत्वेन तत्र तत्संपादनस्यादुष्टत्वेऽपि तदंशे तदाचारस्याननुष्ठेयत्वात् 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि । नो इतराणि', 'महतां वचनं पथ्यं तथैवाचरितं क्वचित्' इत्यादिश्रुतिस्मृतिभ्यां तथैव बोधितत्वाचेत्यन्वय-व्यतिरेकप्रबलोदाहरणपूर्वकोपदेशसूचनलाभात्त्वदभिमतभङ्ग्यन्यतरसरण्या विवरणे तु सु-तरां तदसंभवाच्च, ततः करुणोल्लासे श्रीसीतानिर्याणोत्तरं श्रीरामकर्तृकशोकविकसनेनाहोऽन-न्तकोटिब्रह्माण्डमण्डनपण्डितस्य भगवतश्चण्डांशुवंशावतंसस्य श्रीरामस्यापि सङ्गप्रसादा-देतादृशः शोकः संपन्नस्तत्र कैव कथा मादृशानामज्ञानां विषयैकतत्पराणां पामराणामिति परमनिर्वेदलाभसंभवाद्यथाश्रुते तु तदभावात्प्रत्युत यदि मम तपःसामर्थ्यं स्याचेन्मृताया अपि प्रियायाः परमेश्वरकृपया जयदेवपत्न्या इव पुनर्जीवनं दग्धाया अपि तस्याः सत्सुहृदादिसाम-ग्रीमहिम्ना मदालसाया इव पुनरवाप्तिश्चेति तपआदावभिलाषस्यैव संभवाच्च ततः शान्त्यु-ल्लासे स्वनिदर्शनेन ससाधनस्य 'किं तीर्थं हरिपादपद्मभजनम्' इत्यादिना नीत्युल्लासे सूत्रितस्य 'पातालं व्रज' इत्यादिना मोक्षस्यैव समुपदेशविकसनादधिकतमरसपरिपोषः किं विकचीभ-वति न वेति निर्मत्सराः परित्यक्तपक्षपातप्रसराः सारासारविचारचतुराः सूरीश्वरा एव परि-चिन्तयन्त्विति कृतं पल्लवितेन। हे भामिनि, 'कोपना सैव भामिनी' इत्यमरादयि रूपादिगर्वल-क्षणमानमूलकप्रणयकोपाङ्कुरसुन्दरतरवदने वैदेहि । तेनास्यां मानवतीत्वोत्तमनायिकात्वमुग्धा-त्वानि ध्वनितानि। एवं च तव कादाचित्कप्रणयकोपाङ्कुरोदये सत्यपि मुखे वक्ष्यमाणरीत्या यदेता-वन्निरुपमं लावण्यं तदा तदभावे कियत्तद्भविष्यतीत्यतथात्वमेव त्वया संपादनीयमित्यचि-न्त्यसौन्दर्ये मानापनोदनप्रार्थनं स्वानुकूल्यसंपादनं च सूचितम् । ते तव मुखस्य वदनस्य । एतेन मानवशात्प्रकृतेऽप्रसन्नत्वेऽपि 'कोपेऽपि कान्तं मुखम्' इत्यादौ कविसमयवर्णित-नैसर्गिककमनीयत्वमपह्नवानर्हमेवेति सूचितम् । कापि वक्ष्यमाणहेतुभिरनुपमत्वेनातिलो-कोत्तरैवेत्यर्थः । अनेन ब्रह्मानन्दादपि त्वन्मुखनिरीक्षणानन्दस्य लक्षगुणाधिक्यमिति ध्व-न्यते । शोभा सुषमेत्यर्थः । तर्हि किमसौ नेत्रनासिकादितदवयवेष्वेव नेत्याह—परित इति । समन्ताद्भागेऽपीत्यर्थः । एवं च सर्वावयवसौन्दर्यसंपूरितत्वं व्यज्यते । अहो यस्य समन्ततोऽपि स्वप्रकाशरत्नस्येव कान्तिभरस्तस्य कैमुत्यसिद्धमेव यावदंशसौष्ठवमिति भावः । तत्रापि किं तारुण्यारम्भादिसमयविशेष एवैवं नेत्याह—नित्यमिति । प्रतिक्षणमित्यर्थः । एतेन कृष्णपक्षक्षयिणः शरद्राकासुधाकराद्व्यतिरेकः सूचितः । तर्हि किं सर्वदैकरूपैव मन्मुखशोभा। तथा च नित्यं भावत्कदिदृक्षा तत्र नैव स्यात् । न ह्येकमेव तुल्यावस्थं चेद्र-

स्तु कश्चिदुत्सहते पौनःपुन्येन द्रष्टुम् । उक्तं च—'नवनवगुणरागी प्रायशो जीवलोकः' इति। तत्राह—उपचीयत एवेति । संवर्धत एवेत्यन्वयः । न तु वयःपरिणामेन ह्रसते, नापि प्रथमक्षणानुभूतवदेवाखण्डं तिष्ठति । तस्मादलौकिकमेव तद्वदनलावण्यमित्याशयः । तथा चावयवान्तरं विहाय वदनस्यैवैवं वर्णनेन भाषणस्य तन्मात्रसाध्यत्वात्त्वयेतःपरं मौनं झटिति परित्यज्य प्रसादपूर्वकं स्मरशरवैश्वानरपरितप्तोऽहं मणितामृतसंततसुतुधारनिकरैः परितोषणीय इति श्रीरामस्य सीतां प्रति श्रीकृष्णस्य राधां प्रति वा तद्वदनस्तवनतः प्रार्थनं द्योत्यते । तत्समर्थनार्थं हेतून्व्यनक्ति—नेत्यादिपूर्वार्धेन । यतस्तत्र मनागपीषदपि राहुरोषशङ्कापि राहुसंज्ञकस्य प्रसिद्धासुरविशेषस्य सैंहिकेयस्य रोषः क्रोधस्तस्य शङ्का संभावनापि न। नैवेत्यर्थः । एतेन क्षयित्वाद्यभावः सूचितः । मनाक्पदेन भ्रान्त्यापि तत्संभावनाव्युदासः । तत्र हेतुद्वयम् । नेत्यादि । कलङ्कपाण्डिम्नोरभावादिति भावः । यद्वा अक्षीणत्वेन राहुरोषशङ्कानवकाशेऽपि मानावस्थादिषु रोषदोषवशादस्य भवतु कलङ्काङ्कत्वमित्याशङ्क्याह—नेति । अत्रानुपदेन निरुक्तरीत्यनुसारेणापि नैवात्र कलङ्कपङ्कसंकरावकाश इत्याशयः सूच्यते। गमनं गमः । कलङ्कस्यानुगमः कलङ्कानुगमः । सोऽपि नैवास्तीत्यर्थः । ननु मा भवत्वेवं तामसममर्षमालिन्यमथापि राजसं मत्सरपाण्डुरत्वं तु भवेदेव राकासुधाकरोदयमाकलय्येत्यत्राह—नेति । 'हरिणः पाण्डुरः पाण्डुः' इत्यमरादत्र पाण्डिमापि नैवास्तीत्यर्थः । तस्माद्यतोऽत्र न दोषत्रयवत्त्वं प्रकृतचन्द्रवत्, अतस्त्वद्वदनमनुपममेवेति तात्पर्यम्। एवं च त्वया सद्यो मानं विहाय निरुक्तगुणकथनं यथार्थीकर्तव्यमस्मभ्यं रतिप्रदानेनेत्याकूतम् । इह स्वकीया परकीया वा मुग्धा मानवती नायिका । अनुकूलो नायकः । विप्रलम्भः शृङ्गारः । आधिक्यताद्रूप्यरूपकानुप्राणितो व्यतिरेकालंकारः । तदुक्तं कुवलयानन्दकारिकासु—'व्यतिरेको विशेषश्चेदुपमानोपमेययोः। शैला इवोन्नताः सन्तः किंतु प्रकृतिकोमलाः॥' इति। एवं चाद्भुतोऽप्यत्र रसस्तदङ्गतया ज्ञेयः । मालभारणीवृत्तमिदम् । उक्तं हि वृत्तरत्नाकरे—'ससजाः प्रथमे पदे गुरू चेत्सभरा येन च मालभारणी स्यात्' इति ॥

एवं कृतेऽपि स्तवे प्रागुक्तरीत्या सीतायां राधायां वा मानातिरेकादप्रसन्नायां सत्यां श्रीरामः श्रीकृष्णो वा किं मन्मुखमेवैवं लोकोत्तरगुणाढ्यं नापरशरीरमिति प्रत्युत रोषैकपरितोषकारिणीं तदाशङ्कां प्रशमयंस्तदङ्गमार्दवमपि संवर्णयति—

**नितरां परुषा सरोजमाला**
**न मृणालानि विचारपेशलानि ।**
**यदि कोमलता तवाङ्गकाना-**
**मथ का नाम कथापि पल्लवानाम् ॥ २ ॥**

नितरामिति ।अयि प्रिये, यदि तवाङ्गकानां करचरणाद्यखिलावयवानां कोमलता मृदुता यदि । दैववशादनुभूयेत चेदिति शेषः । एतेन पूर्वोक्तमानवत्त्वादीश्वरस्यापि मे त्वदङ्गसङ्गः सुदुर्लभ एवेति द्योत्यते । तेन किंचिदुपालम्भोऽपि सूच्यते । तदा सरोजमाला कमलमा-

लापि । न तु सरोजमात्रम्, नापि तत्कोरकस्रक् । सापि नितरां परुषा। अत्यन्तं कठोरेत्यर्थः । एवं च तस्याः सौकुमार्योत्कर्षः सर्वानुभवसिद्धोऽपि प्रकृताग्रे तुच्छ एवेति व्यज्यते । एवं भवत्वस्यास्तथात्वम्, परं त्वेतद्गर्भवर्तिबिसतन्तूनां प्रकृतसाम्यं भवेदेवेत्यत्राह—न मृणालानीति । बिसान्यपि विचारपेशलानि सामान्यतः कोमलत्वेन प्रसिद्धान्यपि किं त्वदङ्गापेक्षया तानि तथा वा न वेति संशये यदि तानि कोमलानि त्वदवयवापेक्षया स्युस्तर्हि विरहदशायां त्वया शय्यायां योजितानि सन्ति त्वदङ्गे मुद्राजनकानि न स्युरित्याद्यूहाद्यात्मकविवेके तु पेशलानि 'पेशलो रुचिरे दक्षे' इति विश्वात्कोमलतया रुचिराणि । कोमलत्वे वा दक्षाणि न । नैव सन्तीत्यर्थः । तेन प्रकृतेऽलौकिकमार्दवं ध्वनितम् । यदा मृदुत्त(?)धुरंधराणां मृणालानामपीदृगवस्था, अथ तदा पल्लवानाम् । साकूतमिदम् । पदस्त्वत्पदो लवः सौन्दर्यस्य लेशो येषु ते तथा । तेषां का नाम कथा । न कापीत्यन्वयः । अत्र परिकराङ्कुरः काव्यार्थापत्तिश्चालंकारः । तदुक्तं कुवलयानन्दकारिकासु—'कैमुत्येनार्थसंपत्तिः काव्यार्थापत्तिरिष्यते । स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥' इति । एवं विशेष्यस्य साभिप्रायत्वे परिकराङ्कुरोऽपि तत्रैवोक्तः । सोऽत्र स्फुट एव । शेषं तु सर्वं प्राग्वदेवात्राप्यनुसंधेयम् ॥

अथैवं प्रार्थनेऽप्यतिभूमिगतमानत्वेनाप्रसन्नामेव सीतां राधां वा श्रीरामः श्रीकृष्णो वाकलय्योपेक्षाया अपीदृक्स्थले कार्यकारित्वस्य लोकाद्यालोकितत्वेन तामेव कुर्वन्नपि निरुक्तनायिकासौन्दर्यादिपारवश्येन परमविकलश्च सन्संस्कारवशात्तद्विपरीतसुरतावस्थां रतान्तोत्तरद्वित्रिपलोत्तरं पुनः स्वेन रतिप्रार्थनायां कृतायां सत्यां तदनादरद्योतकमस्तकदोलनावस्थां वा स्मृत्वा ततः संजातं दुःखोत्कर्षमसहमानः स्वमनस्येव रहसि दैवं पुरःस्थितमिव प्रकल्प्य तत्प्रतिवदति—

**स्वेदाम्बुसान्द्रकणशालिकपोलपालि-**
**दोलायितश्रवणकुण्डलमण्डनीया ।**
**आनन्दमङ्कुरयति स्मरणे न कापि**
**रम्या दशा मनसि मे मदिरेक्षणायाः ॥ ३ ॥**

स्वेदाम्बुसान्द्रेति । रे दैव । मदिरेति । मदिरेवेक्षणमवलोकनं यस्याः सा तथा तस्याः । सुरासमसंमोहकविलोकनाया इत्यर्थः । एतेन अहो यस्याः स्वाभाविकनिरीक्षणमपि मद्यवत्स्वास्वादकमादकं किं वाच्यं तस्याः प्रोक्तावस्थावलोकनस्मरणं तथेति तदनास्था दुःखातिरेकः सूच्यते । कापि निर्वक्तुमशक्यापि । एवं चालौकिकत्वं तदवस्थायां व्यज्यते । तेनाप्युक्तविप्रलम्भपरिपोष एव प्रध्वन्यते । तर्हि किं विपरीता । नेत्याह—रम्येति । एतेन शोकशङ्कानवकाशः सूचितः । एतादृशी दशावस्था मे मम मनस्यन्तःकरणे स्मरणे । जायमाने सतीत्यर्थः । आनन्दं हर्षम् । नाङ्कुरयति नैवाविर्भावयत्यपि किं पुनर्वक्तव्यं न वर्धयतीति संबन्धः । वक्ष्यमाणगुणायाः पूर्वोक्तालौकिकनायिकावस्थायाः स्मरणे जाय-

माने मन्मनसि मनसिजपरिताप एव भूरितरं भवतीति भावः। यथाश्रुतभट्टास्तु यथाश्रुतमेव स्मरणपदं तृतीयान्तं कृत्वा योजयन्ति। तेषां स्मरणस्य परोक्षैकविषयत्वेनावश्यं वियोगकालिकत्वस्य वाच्यत्वात्तदानीं निरुक्तस्मरणस्य दुःखैकजनकत्वस्यानुभवसिद्धत्वेनानन्दजनकत्वस्य सुतरामयुक्तत्वादाग्रहेण तदङ्गीकारे तु प्रकृते प्रतिपाद्यत्वेन विवक्षितस्य शृङ्गारस्य भङ्ग एव भवेत्। तस्माद्युक्तमेवेदं सप्तम्यन्तत्वेन व्याख्यानमिति तत्त्वेन विदो विदांकुर्वन्त्विति दिक्। कुत एतदिति चेदत आह—स्वेदेत्यादि पूर्वार्धेन निरुक्तदशां विशेषयन्। स्वेदाम्बुनः पूर्वोक्तरतिश्रान्तिजन्यघर्मोदकस्य ये सान्द्राः, न तु विरलाः। तेन श्रमाधिक्यात्सौकुमार्याधिक्यं ध्वन्यते। ते च ते कणाः 'लवलेशकणाणवः' इत्यमरान्मौक्तिकजालकतापन्नाः पृषतास्तैः शालते शोभत इति तथा। तादृशी या कपोलपालिः कपोलयुगुलस्थली तस्यां दोलायिते पुरुषायितवेगादान्दोलायमाने तत्कालावच्छेदेन रतान्तश्रान्तत्वात्कान्तयाचितरतान्तरनिषेधध्वनकसकृच्छिरोवधूननतो वा तथाभूते ये श्रवणकुण्डले कर्णस्थिते रत्नताटङ्के ताभ्यां मण्डयितुं विभूषयितुं योग्येति तथा। अत्र दशावन्मण्डनेनैव यौवनवद्दशामण्डनं बोध्यम्। एवमम्बुपदं श्रवणपदं चाधिकवदपि तत्कणेषु मौक्तिकत्वस्य कुण्डलयोस्तन्निष्ठत्वेन विलक्षणशोभावत्त्वस्य च सूचकत्वादुचितमेवेति। इह स्वकीयादिः प्रागुक्तैव नायिका रसश्च। विरहातुरो नायकः। चरमपदे लुप्तोपमादिरलंकारः। वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति॥

अथैवं विरहार्ततां नायकस्य सख्यादिद्वारा ज्ञात्वा द्वितीयदिवसे सायं स्वयमेवाभिसृतां सीतां राधां वा श्रीरामः श्रीकृष्णो वा राकापीयूषकरापेक्षयापि निष्कलङ्कत्वादिना लोकोत्तराननसौन्दर्यवर्णनेनाभिनन्दयति—

**कस्तूरिकातिलकमालि विधाय सायं**
**स्मेरानना सपदि शीलय सौधमौलिम्।**
**प्रौढिं भजन्तु कुमुदानि मुदामुदारा-**
**मुल्लासयन्तु परितो हरितो मुखानि॥ ४॥**

कस्तूरिकेति। अयि आलि। स्वतोऽभिसरणतः सखीप्राये प्रिये इत्यर्थः। एतेन वक्ष्यमाणप्रार्थनकरणयोग्यत्वं व्यङ्ग्यम्। त्वं कस्तूरिकातिलकं निजवदनस्य मृगाङ्कतौल्याप्तये मृगमदविशेषकमित्यर्थः। एवं च तन्मुखस्य निष्कलङ्कत्वेन पूर्णचन्द्रापेक्षयापि विलक्षणानन्दप्रदत्वं द्योत्यते। विधाय ललाटे कृत्वा। अद्य सायं स्वयमभिसरणात्स्मेरानना। स्मेरमागन्तुकमानादिजन्यरोषावमोषेण नैसर्गिकमन्दहासयुक्तमित्यर्थः। एतादृशमाननं मुखं यस्याः सा तथा। स्मितवदना वर्तस एवेति यावत्। अतः सपदि झटितीत्यर्थः। एतेन यदि विलम्बं कुर्याश्चेत्कदाचित्पूर्ववत्पुनर्मानवशाद्रोषकषायिताननापि स्याः। तदानीं वक्ष्यमाणास्मत्समीहितं न स्यादित्युपालम्भेन किंचिद्विनोदोऽपि द्योतितः। समयातिक्रमभीस्तु मुख्यं प्रयोजनम्। सौधेति। नैजराजमन्दिरमूर्धानमित्यर्थः। शीलयाधिरोहेति योजना।

किमर्थमिति चेत्तदाह—प्रौढिमित्याद्युत्तरार्धेन । कुमुदानि कैरवाणि न त्वब्जानि । मुदामानन्दानाम् । 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः । उदारां निरतिशयाम् । एतेन चन्द्रदर्शनजन्यानन्दस्य तेषां प्रायः प्रतिदिवसं सत्त्वेऽपि तस्य सातिशयत्वात्त्वद्वदनदर्शनजन्यस्य निरतिशयत्वाच्च त्वदाननं लोकोत्तरसुन्दरमेवेति सूचितम् । प्रौढिं प्रौढताम् । भजन्तु । स्वीकुर्वन्त्वित्यर्थः । तथा हरितः 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमराद्दिश इत्यर्थः । मुखान्याननवत्त्वस्वाग्रिमपुरोदेशानिति यावत् । उल्लासयन्तु प्रोज्वलयन्त्वित्यन्वयः । तस्मात्कुमुदानन्दसंदोहार्थं सकलदिङ्मुखविकासार्थं च त्वया निरुक्तव्यापारवत्या द्रुतं भाव्यमिति भावः । अत्र कुमुदहरितपदाभ्यामहो नपुंसकानां स्त्रीणां चापि यदाननविलोकनेन यदानन्दोदयस्तदा किमु वक्तव्यं तदानननिरीक्षणेन क्षणेनैव पुंसां विलक्षणोऽसाविति व्यज्यते । इह स्वकीया परकीया वा मध्याभिसारिका नायिका । मुदितो नायकः । संभोगारम्भः शृङ्गारः । आधिक्याभेदरूपकमलंकारः ॥

एवं प्रार्थनतस्तथा चरणोत्तरं निरुक्तकुमुदानन्दादिव्यवहारे जायमाने पुनरप्यतीव गर्वितायां सीतायां राधायां वा सत्यां ततः सुरतादिविलासमलभमानः श्रीरामः श्रीकृष्णो वा भूरिवारं प्रेरितामपि तद्वचनानादरेणेतः परमुपेक्षैव त्वया विधेयाधुनेत्युपदिशन्तीं तत्प्रियसखीं प्रति वक्ति—

**तन्मञ्जु मन्दहसितं श्वसितानि तानि**
**सा वै कलङ्कविधुरा मधुराननश्रीः ।**
**अद्यापि मे हृदयमुन्मदयन्ति हन्त**
**सायंतनाम्बुजसहोदरलोचनायाः ॥ ५ ॥**

तन्मञ्ज्विति । 'मन्दमञ्जु' इत्यपि पाठः । हे प्रियाप्रियसखि । सायंतनेति । सायंकालिककमलसादृश्यशालिविलोचनायाः प्रक्रान्तस्वप्रियाया इत्यर्थः । एतेन तस्यां सुरतमुखनिमीलितनेत्रत्वं ध्वन्यते । तत्पूर्वं कदाचित्सुरतसमये समनुभूतमित्यर्थः । यद्यपि वक्ष्यमाणहसितस्योक्तनायिकायां नैसर्गिकत्वेन प्रागुक्तसौधमौल्यधिरोहणप्रार्थनकालीनत्वैकौचित्यादुक्तकालिकत्वमयुक्तमेव, तथापि श्वसितसायंतनपदाभ्यां तात्पर्यतः प्रोक्तावसरीयत्वस्यैव तत्र सुघटमानत्वाद्युक्तमेवोक्तव्याख्यानम् । एतेन निरुक्तमानादिवशाद्धित्रिदिनमपि संभोगालाभप्रयोजकत्वेन कोटिकल्पायमानमेव ममेति स्वातुरत्वं व्यज्यते । एतादृशं मञ्जु 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमराच्चारुचन्द्रिकया चेतोहरमित्यर्थः । तर्हि किं प्रहसितं ग्राम्यजनवत् । नेत्याह—मन्देति । तेन तस्यामुत्तमोत्तमत्वं द्योत्यते । तथा तानि निरुक्तकालीनान्येव श्वसितानि पद्मिनीजातीयत्वेन सुरतश्रान्तिजनितसुरभितरोच्छ्वासजातानीत्यर्थः । एतदपि तस्यैव परिपोषकम् । तेनोक्तकालिकत्वेन स्मितादिष्वलौकिकत्वं ध्वन्यते । तथा सा तात्कालिक्येव । वै निश्चितम् । न त्वयं गुणकथनारोपः स्वप्रेमविषयतयेत्याशयः । कलङ्केति । कलङ्कः कपोलनिर्मितकस्तूरीपत्त्ररचनलक्षणलाञ्छनविशेषः । एवं च तन्मुखस्य प्रकृत्यैव र-

म्यतमत्वान्मण्डनानपेक्षत्वेऽपि तस्य शास्त्रादिसंप्रदायैकपरिपालनौपयिकत्वेनादरणीयत्वं द्योत्यते । तेन विधुरा सुरतश्रमनिर्मितघर्मवशात्तदपसारणात्तच्छून्येत्यर्थः । अत एव मधुरा । 'मधुरं रसवत्स्वादुप्रियेषु मधुरोऽन्यवत्' इति विश्वात्सरसेत्यर्थः । एतेन हीरकादेर्निष्कलङ्कस्यापि निरुक्तकान्तिमत्वव्युदासः सूचितः । एतादृशी याननश्रीर्मुखलक्ष्मीरित्यर्थः । केचित्तु मञ्जुमन्देति मधुराननेति च पदैक्येनैव व्याचक्षते । तेषां सर्वथासमस्तपदात्मकवैदर्भीरीतिमत्त्वस्य मधुररसपरिपोषकत्वानभिज्ञत्वमेव मूलम् । एतानि धर्मजातानि । हन्तेति खेदे । अद्याप्येतावति भूरितरकाले गतेऽपीत्यर्थः । एवं च प्रागुक्तं स्वातुरत्वमेव परिपोषितम् । मे मम हृदयं स्वान्तम् । उन्मदयन्ति स्मृतिशतैरुन्मत्तं कुर्वन्तीत्यन्वयः । अतस्त्वया शीघ्रं तादृग्घटनपाटवेन साभिसारणीयैव, अन्यथास्माकमुन्मत्तवाताद्यापातेन वैपरीत्यमेव संभाव्यत इति भावः । अत्र मध्या मानवती प्रकृता स्मृतिविषयीभूता तु परितृप्ता स्वकीया परकीया वा नायिका । व्याकुलो नायकः । विप्रलम्भः शृङ्गारः । कलङ्केत्याधिक्यताद्रूप्यरूपकं सार्यंतनेति लुप्तोपमा चालंकारः ॥

एवं निवेदितनिजवृत्तया सख्या सामाद्युपायैः प्रतिबोधिता सती सीता राधा वा द्वितीयदिने प्रससादेति कविः संवर्णयति—

**प्रातस्तरां प्रणमने विहिते गुरूणा-**
**माकर्ण्य वाचममलां भव पुत्रिणीति ।**
**नेदीयसि प्रियतमे परमप्रमोद-**
**पूर्णादरं दयितया दधिरे दृगन्ताः ॥ ६ ॥**

प्रातस्तरामिति । दयितया प्रकृतनायिकया प्रातस्तरामत्युषःकाले गुरूणां श्वश्रूप्रभृतीनां पूज्यानाम् । प्रणमने प्रकर्षेण धर्मशास्त्राद्युक्तक्रमाद्यनुसरणलक्षणोत्कर्षेण नमने नमस्करणे । विहिते विधिवत्कृते सति । अथ त्वं पुत्रिणी पुत्रवती भवेत्यमलां निष्कपटां वाचं वाणीम् । अर्थादुक्तगुरूणामेवाशीर्वादभारतीमित्यर्थः । आकर्ण्य श्रुत्वा । नेदीयसि निकटवर्तिनि प्रियतमे श्रीरामे श्रीकृष्णे वा । स्वप्रेमविषयीभूते कान्त इति यावत् । परमेति । परमो निरुपमः स चासौ प्रमोदो हर्षस्तेन पूर्णो निरवधिक आदरः सत्कारो यथा स्यात्तथेत्यर्थः । दृगन्ताः । न तु दृगन्तः । कटाक्षा इत्यर्थः । एवं च तेषां पौनःपुन्यं ध्वन्यते । दधिरे स्थापिता इति संबन्धः । न तु प्रेषिताः । तथा च पुनस्ततः स्वापाङ्गानाकर्षणात्प्रतिक्षणं नवनवापाङ्गास्तत्रैव निधीयन्त इत्यर्थसमाजव्यञ्जनेन प्रसादप्राचुर्यं सूचितम् । इत्थं च 'उत्तमानां क्षणं कोपः' इति वाक्येन तथासौ झटिति सुप्रसन्ना बभूवेति भावः । ततः पुत्रस्य भवत्संभोगैकसाध्यत्वादद्याहं स्वरसत एव संपादयिष्याम्येवेत्याश्वासनं नायकं प्रति द्योत्यते । अत्र मध्या सुप्रसन्ना स्वकीया परकीया वा नायिका । प्रहृष्टो नायकः । संभोगलेशः शृङ्गारः । स्वभावोक्तिरलंकारः ॥

अथ यावन्निशि तदभिसरणं निरुक्ततद्दीक्षणमेवानुसंदधानः श्रीरामः श्रीकृष्णो वा याम-चतुष्टयविश्लेषमप्यसहिष्णुः सन्स्वमनसेव विलपति—

**गुरुजनभयमद्विलोकनान्तः-**
**समुदयदाकुलभावमावहन्त्याः।**
**दरदलदरविन्दसुन्दरं हा**
**हरिणदृशो नयनं न विस्मरामि॥ ७॥**

गुरुजनेति। अहम्। हा इति खेदे। हरिणदृशो मृगाक्ष्याः सीताया राधाया वा। गु-र्विति। गुरवः श्वश्रूप्रभृतयो ये जना लोकास्तेभ्यो भयं तत्संनिधौ प्रियवीक्षणानौचित्यसा-ध्वसं तथा मद्विलोकनमनुपदोक्तमन्निरीक्षणं च ताभ्यां योऽन्तःसमुदयन्मनस्याविर्भवन्य आकुलभावो विह्वलीभावस्तमावहन्त्या दधत्याः। अनेन लज्जाभयलालसवैक्लव्यं सूचितम्। अत एव—दरेति। किंचिदुन्मीलदम्बुजमञ्जुलम्। त्रिभागभङ्गुरमित्यर्थः। एतादृशं नय-नम्। न तु नेत्रे। तेनोक्तरसपोष एव। न विस्मरामि। पुनः पुनः स्मराम्येव। दृढसं-स्कारैरिति योजना। तस्मात्कदेन्दूदयः स्यादित्यौत्कण्ठ्यं व्यज्यते। इहोक्तैव नायिका। उत्कण्ठितो नायकः। विप्रलम्भः शृङ्गारः। लुप्तोपमालंकारः परिकरश्च। पुष्पिता-ग्रावृत्तम्। उक्तं हि वृत्तरत्नाकरे—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति॥

ततः सायमभिसृतां सीतां श्रीरामो राधां प्रति श्रीकृष्णो वा परमप्रहृष्टः संस्तत्कुचा-वेव प्रथमं संभोगारम्भस्यालिङ्गनपूर्वकत्वेन कामशास्त्रे निर्णीतत्वात् 'अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी। दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला॥' इति स्मृतेरेकादशवर्षा-दिवयःक्रमेण पञ्चबाणप्रेरणयैव पञ्चविधत्वं प्राप्तत्वेन वर्णयति—

**बदरामलकाम्रदाडिमाना-**
**मपहृत्य श्रियमुन्नतां क्रमेण।**
**अधुना हरणे कुचौ यतेते**
**दयिते ते करिशावकुम्भलक्ष्म्याः॥ ८॥**

बदरेति। अयि दयिते भो प्रेयसि, ते तव कुचौ वक्षोजौ क्रमेण। बदरेति। अ-त्रोत्तरोत्तरमहत्त्वकठिनत्वाधिक्यं ध्वन्यते। उन्नतां महतीम्। वर्तुलत्वाद्यनेकधर्मैर्गुरुतरामि-त्यर्थः। श्रियं शोभाम्। न हि क्रममन्तरा महत्याः श्रियो हरणम्। तेन तयोः परमनी-तिनिपुणत्वान्मन्मनोहारकत्वं कैमुत्यसिद्धमेवेति द्योत्यते। अपहृत्य बलाद्गृहीत्वेत्यर्थः। अ-धुनेदानीम्। करीति। करिणो गजस्य यः शावः पोतः। एतेन व्यामग्राह्यस्तनीत्वा-दिना शबरतरुणीत्वादेर्व्युदासः। तेन पद्मिनीत्वं तस्यां व्यज्यते। तस्य यौ कुम्भौ करटौ

तयोर्या लक्ष्मीः शोभा तस्या इत्यर्थः । हरणे यतेते यत्नं कुरुत इत्यन्वयः । एवं च लोके प्रायेण गजान्तलक्ष्म्या एव संपाद्यत्वप्रवादात्तत्संपादने निरुक्तकुचाभ्यां कृते सत्यस्यां प्रौढावस्थात्वमेव स्यात्तथा च प्रागुक्तरीतिकोऽविवेकमूलकः प्रायो मानो नैव स्यादिति किंचिदुपालम्भः स्वावश्योपभोग्यत्वं च सूचितम् । इह मध्यानुकूला स्वकीया परकीया वा नायिका । मुदितो नायकः । संभोगारम्भः शृङ्गारः। पर्यायविशेषोऽलंकारः । तदुक्तम्—'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः । पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा ॥' इति । प्रकृते तु पर्यायेणैकस्यानेकश्रीहर्तृत्वेनैवानेकसंश्रयस्तथापरश्रीहरणयतमानत्वेनापीति विशेषः ॥

अथैवं कुचवर्णनोत्तरमालिङ्गनं संपाद्य क्रमागतं चुम्बनं संपादयितुं श्रीरामः सीतां प्रति श्रीकृष्णो राधां प्रति वा तत्कपोलपालिमेव तुरीयपुमर्थापादकतुरीयाश्रमप्रवृत्तियोग्योदग्दिक्त्वेनोत्प्रेक्षते—

> **कपोलपालिं तव तन्वि मन्ये**
> **लावण्यधन्ये दिशमुत्तराख्याम् ।**
> **विभाति यस्यां ललितालकायां**
> **मनोहरा वै-श्रवणस्य लक्ष्मीः ॥ ९ ॥**

कपोलेति । हे तन्वि कृशाङ्गि । एतेन निरुक्तगाढालिङ्गनासहिष्णुत्वेन सौकुमार्यातिशयः सूचितः । तथा हे लावण्यधन्ये । मौक्तिकसदृशकान्त्याख्याते इत्यर्थः । एतेनोत्तमतमत्वं द्योतितम् । तव । इमामित्यध्याहारस्तु वक्तुस्तदेकासक्तत्वेनानवधानताद्योतकतया रसैकपोषकत्वाद्गुण एव । तथा चाङ्गुलिनिर्देशः प्रत्यक्षत्वेन तस्यां व्यज्यते । कपोलपालिं कपोलस्थलीम् । उत्तराख्यामुदक्संज्ञां दिशमेवाहं मन्ये तर्कयामीति योजना। कुत इत्यत आह—विभातीत्याद्युत्तरार्धेन । यस्यां कपोलपालौ । पक्षे निरुक्तदिशि । ललितेति । ललिताः सुन्दरा अलकाश्चूर्णकुन्तला यस्यां सा तथा । पक्षे ललिता रम्या अलका कुबेरनगरी यस्यां सा तथा । एतादृश्यामित्यर्थः । अत एव वै निश्चितं श्रवणस्य कर्णस्य । पक्षे पदैक्यम् । कुबेरस्य । 'किंनरेशो वैश्रवणः' इत्यमरः । लक्ष्मीः शोभा । पक्षे संपत् । मनोहरा रम्यतमा । विभाति परिस्फुरतीति संबन्धः । तस्मात्कपोलचुम्बनं देहीत्याशयः । इह हेतूत्प्रेक्षा तद्घटको भङ्गश्लेषश्चालंकारः । शेषं तु प्राग्वदेव ॥

एवं संपादिते सति निरुक्तरात्रावातृप्ति सकलसंभोगे रात्र्यन्तरे पुनर्लीलया प्रणयकुपितां सीतां श्रीरामो राधां श्रीकृष्णो वालक्ष्य तत्प्रसादनार्थं तत्प्रियसखीं प्रति तल्लीलापारवश्यं स्वस्य वर्णयति—

> **नीवीं नियम्य शिथिलामुषसि प्रकाश-**
> **मालोक्य वारिजदृशः शयनं जिहासोः ।**

**नैवावरोहति कदापि च मानसान्मे**
**नाभेः प्रभा सरसिजोदरसोदरायाः ॥ १० ॥**

नीवीमिति । अयि प्रियाप्रियसखि, उषसि प्रातः । प्रकाशं सौरालोकलेशमालोक्य दृष्ट्वा । शिथिलां पूर्वरात्रौ सुरतार्थमौत्सुक्यात्त्वत एव च्युतां नीवीं स्वजघनवसनग्रन्थिं नियम्य वामकरेण संरुद्ध्य । शयनं निद्राद्यनुकूलावस्थानं जिहासोस्त्यक्तुमिच्छोः । एतादृश्या वारिजदृशः पद्माक्ष्याः । अतएव । सरसिजेति । सरसिजं कोकनदमेव प्रकृते वक्ष्यमाणसारस्यवशाद्ग्राह्यम् । तस्य यदुदरं मध्यभागस्तस्य सोदरा सादृश्यातिशयात्सहोदरभगिनीसमा । तस्या इत्यर्थः । एतादृश्या नाभेः शरीरमध्यग्रन्थेः प्रभा कान्तिः । मे मम मानसादन्तःकरणात् । पक्षे सरोविशेषात् । कदापि च कदाचिदपि । नैवावरोहत्यपगच्छतीत्यन्वयः । नाभेः स्वभावतो निम्नतमत्वगौरत्वावर्ताकारत्वादिना कमलमध्यगतपीतवर्णकर्णिकासाम्यान्नीवीनिरोधननियोजितकराङ्गुल्या रक्तकान्तिमण्डितत्वेन कोकनदीयत्वावभासयोग्यत्वाच्च पुनः सुरतौत्कण्ठ्यजनकत्वेन तद्विलक्षणप्रभानुभवस्य संस्कारदार्ढ्यात्सूर्योदयवशाद्रत्यनौचित्येनौत्सुक्यपौष्कल्याच्च तत्प्रभायाः स्मृतिद्वारा निरुक्तनायकचित्तानवरोहध्वनितनिरुक्तनायिकाविषयकाभिलाषपरिपोषकतैवेति कदापि चेति पदैः सूचितम् । तस्मात्त्वं शीघ्रमेव तां प्रसादयेत्याशयः । अत्र मानवती प्रकृता लीलावती तु स्मृता मध्या स्वकीया परकीया वा नायिका । उत्सुको नायकः । विप्रलम्भः शृङ्गारः । लुप्तोपमा स्वभावोक्तिश्चालंकारः ॥

अथ तत्सौजन्यमुपन्यस्यति—आलीष्वित्यादिद्वाभ्याम् ।

**आलीषु केलीरभसेन बाला**
**मुहुर्ममालापमुपालपन्ती ।**
**आरादुपाकर्ण्य गिरं मदीयां**
**सौदामनीयां सुषमामयासीत् ॥ ११ ॥**

बाला । अत एव । प्रथमचरणशेषः । ममालापं मद्विलासीयमाभाषणम् । सौदामनीयां 'तडित्सौदामनी' इत्यमराद्विद्युत्संबन्धिनीम् । सुषमां 'सुषमा परमा शोभा' इत्यपि तदुक्तेविलक्षणचापल्येन लोकोत्तरकान्तिमित्यर्थः । अयासीदगमत् । एवं च लज्जातिशयः सूचितः । अत्र लज्जिता मध्यादिर्नायिका । शेषं तु प्राग्वदेव । उपजातिर्वृत्तम् ॥

**मुधैव मन्तुं परिकल्प्य गन्तुं**
**मृषैव रोषादुपजल्पतो मे ।**

**उदश्रुचञ्चन्नयना नताङ्गी**
**गिरं न कां कामुररीकरोति ॥ १२ ॥**

मुधैवेति । व्यर्थमेव । मन्तुं 'आगोऽपराधो मन्तुश्च' इत्यमराद्दोषम् । उदिति । उद्गतान्यश्रूणि याभ्यां ते तथा । अतएव चञ्चती चपले तादृशे नयने यस्याः सा तथा । अतएव नतेति । कां कामपि गिरं नोररीकरोति नैवोच्चारयतीति योजना । वर्तमानप्रयोगात्परमसुशीलत्वं द्योत्यते । चकारेति भूतार्थकपाठेऽपि वक्तृभाषणक्षणाव्यवहितप्राक्क्षणावच्छिन्नत्वेन तत्सांगत्यात्तादर्थ्यमेवेति तत्त्वम् । अत्र खिन्ना मध्यादिर्नायिका । लुप्तोपमेतरत्सर्वं प्राक्तनमेव । उपेन्द्रवज्रावृत्तम् ॥

ननु 'मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे । स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ॥' इत्यादि श्रीमद्वासिष्ठाद्युक्तरीत्या श्रीमद्भिर्विवेकिभिरेव भाव्यम्, किमनेन पामरजनसाधारणेन तदौत्कण्ठ्येनेति सख्याशयमाशङ्क्य सामान्यव्याप्त्या तां प्रत्याह—तदवधीत्यादिना ।

**तदवधि कुशली पुराणशास्त्र-**
**श्रुतिशतचारुविचारजो विवेकः ।**
**यदवधि न पदं दधाति चित्ते**
**हरिणकिशोरदृशो दृशोर्विलासः ॥ १३ ॥**

श्रीराम एव हे सखि, विवेकः कुशली क्षेमशाली तदवध्येव तावत्कालमेव । न तूर्ध्वमित्यार्थिकम् । किमवधीति तदाकाङ्क्षितं पूरयति—यदवधीत्युत्तरार्धेन । हरिणेति साभिप्रायम् । कुरङ्गशावाक्ष्या इत्यर्थः।तत्रापि दृशोः,न तु दृशः । तत्रापि विलासः,न तु भासः।एतेन सानुरागापाङ्गतरङ्गितत्वं तत्र व्यज्यते । स यदवधि चित्ते नायकमनसि पदम् । चरणोपलक्षितं स्वसंचारमिति यावत् । न दधाति तदवधीत्यादि पूर्वेण संबन्धः । ननु न्वापातिकलौकिकविवेकमात्रेण कामिनीविषयकः कामः शाम्यत्यतो निरुक्तविवेकं विशिनष्टि—पुराणेति । उत्तरोत्तराधिक्यध्वननार्थं शास्त्रादिग्रहः । तासामपि शतं तस्यापि चारुरुपक्रमादितात्पर्यावधारणपूर्वकः, न त्वापातिकः। 'शतवारविचार—' इति पाठे त्वावृत्तिरसकृदुपदेशादित्यधिकरणार्थो बोध्यः । एतादृशो यो विचारः प्रमाणानुग्राहकलौकिकादियुक्त्यूहापोहस्ततो जायत इति तथेत्यर्थः । ईदृशोऽप्यसौ तावदेवायुष्मान्यावन्नोक्तकटाक्षच्छटास्मृतिरतः सैव शीघ्रं त्वया प्रसादनीयेत्याशयः । उक्तं हि—'अनुरक्ताङ्गनालोललोचनालोचनाकृति । स्वस्थीकर्तुं मनः शक्तो न विवेको महानपि॥' इति । अत्र विवेकस्य निरुक्तजन्यतोक्त्या नित्यसिद्धविवेकाख्यसार्वज्ञ्यशक्तेः श्रीकृष्णस्य व्युदासः सूचितः । श्रीरामस्य तु बृहद्वासिष्ठोक्तरीत्या सनत्कुमारदत्तावरणागमनशापाङ्गीकरणलक्षणभक्तानुग्रहणादिमनुष्यनाट्यलीलानटनपाटववत्त्वेन तदुचितमे-

वेति न कोऽपि शङ्कावकाशः। इह हरिणेत्यादौ परिकराङ्कुरादिरलंकार एवाधिकः। परकीयामन्तरा नायिकादिकं तु सर्वं प्रागवदेव। श्रीकृष्णे मोहावर्णनात्॥

अथौत्कण्ठ्यौत्कट्याच्छ्रीरामस्तावन्निरुक्तसखीसमक्षमेव स्वमनोरथं प्रथयति—

**आगतः पतिरितीरितं जनैः**
**शृण्वती चकितमेत्य देहलीम्।**
**कौमुदीव शिशिरीकरिष्यते**
**लोचने मम कदा मृगेक्षणा॥ १४॥**

आगत इति। भो भर्तृदारिके सीते, तव पतिः श्रीरामस्त्वन्मन्दिरं प्रत्ययमागत इति जनैः सखीजनैरीरितं कथितं वाक्यजातं शृण्वत्येव सती, न तु श्रुत्वा। तेनादरातिशयो द्योत्यते। अत एव चकितं यथा स्यात्तथा। देहलीम्। प्रत्युद्गमनविधया मन्दिरद्वारान्तःप्रदेशस्थलीं प्रतीत्यर्थः। एतेन मर्यादातिशयः सूचितः। एवं चकितपदेनौत्कण्ठ्यातिशयश्च। मृगेति। हरिणाक्षी जानकी। तेन लोचनयोश्चाञ्चल्याधिक्याल्लालस्योत्कर्षो व्यज्यते। कौमुदीव शरद्राकाचन्द्रिकेव मम लोचने कदा शिशिरीकरिष्यत इत्यन्वयः। एतेनाशंसाधिक्यं ध्वन्यते। अत्र पतिपदात्स्वकीयैव मध्योत्कण्ठिता नायिका। स एव नायकः। विप्रलम्भः शृङ्गारः। चपलातिशयोक्तिः पूर्णोपमा लुप्तोपमा चालंकारः। रथोद्धतावृत्तम्। तदुक्तम्—'रो नराविह रथोद्धता लगौ' इति॥

नन्वेवं जानक्याः प्रत्युद्गमादिसंप्रदायः कदाचिदनुभूतः किंवा कामुकतया केवलमुत्प्रेक्ष्यत इत्याशङ्क्य प्रागेवं प्रत्यहमनुभूतमेवेति श्रीरामस्तत्सखीं प्रति यथावृत्तं निवेदयति—

**अवधौ दिवसावसानकाले**
**भवनद्वारि विलोचने दधाना।**
**अवलोक्य समागतं तदा मा-**
**मथ रामा विकसन्मुखी बभूव॥ १५॥**

अवधाविति। भो सखि, तदा निरुक्तमानावस्थापूर्वकाले। रामा। रमयते सा रामा। रूपलावण्यादिभिः शरीरधर्मैः पातिव्रत्यादिभिर्मनोधर्मैश्च तद्वशीकरणनिपुणा वैदेहीत्यर्थः। एतेनानुपेक्षणीयत्वं द्योत्यते। दिवसेति। सायंसमयरूप इति यावत्। अवधौ। 'अवधिस्त्ववसाने स्यात्सीम्नि कालेऽपि चावधिः' इति विश्वादन्तःपुरानागमनप्रयोजकपरिसमाप्ताविर्थः। एतेन स्वस्य तस्याश्च धार्मिकत्वं ध्वन्यते। भवनेति। शुद्धान्तद्वार इत्यर्थः। विलोचने दधाना। नेत्रे तटस्थीकुर्वाणा सतीति यावत्। मां समागतमवलोक्य। अथ तदुत्तरक्षणावच्छेदेनैव, न तु किंचिद्विमृश्यापि। एवं च प्रीत्यतिशयः सूचितः। विकसदिति। ए-

तेन वदनेऽरविन्दत्वं व्यज्यते । तेन तत्काले तद्विकासादद्भुतरसेन लोकोत्तरानन्दो ध्वनितः । तस्मात्त्वयाधुना तत्प्रसादनार्थं यतितव्यमेवेति भावः । इह स्मर्यमाणा अनुकूला वर्तमाना मानवती स्वकीया मध्यैव नायिका । उत्सुको नायकः । विप्रलम्भः शृङ्गारः । काव्यलिङ्गमलंकारः ॥

अथ निरुक्तसखीं प्रत्येव श्रीरामः सीतायाः श्रीकृष्णो राधाया वा शीघ्रं वशीकरणप्रयोजकस्वौत्कण्ठ्यद्योतकस्वविषयकतदनुरागौत्कठ्यमपि प्रकटयति—वक्षोजाग्रमित्यादिभिस्त्रिभिः—

**वक्षोजाग्रं पाणिनामृश्य दूरं**
**यातस्य द्रागाननाब्जं प्रियस्य ।**
**शोणाग्राभ्यां भामिनी लोचनाभ्यां**
**जोषं जोषं जोषमेवावतस्थे ॥ १६ ॥**

हे सखि, कदाचिदेकान्ते वक्षोजाग्रं कुचाग्रम्, न तु कुचौ कुचं वा । तेन विनोदः सूचितः । पाणिना करेण । आमृश्य । ईषत्स्पृष्ट्वेत्यर्थः । द्राक् । 'द्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते' इत्यमराच्छीघ्रमित्यर्थः । दूरं यातस्य तत्रापि प्रियस्य प्रीतिविषयस्य । ममेत्यर्थः । एतेन वक्ष्यमाणरोषस्य प्रणयमूलकत्वं द्योत्यते । आननाब्जं मुखचन्द्रं वदनकमलं वा । भामिनी निरुक्तचूचुकस्पर्शतः प्रोद्दीप्तकामापूर्तेः कोपना । पूर्वोक्तनायिकेति यावत् । शोणेति । अरुणकोणाभ्यामित्यर्थः । एवं च हार्दस्य कोपाग्नेर्बहिः प्रभापि व्यञ्जिता । एतादृशाभ्यां लोचनाभ्याम् । जोषं विनोदानुसंधानात्प्रथमं सुखं यथा स्यात्तथा । ततः । जोषं किमथ निकटमभिसर्तव्यं न वेति संदेहात्तूष्णीं यथा तथा । पुनः । जोषमेव किमनेनेदं मन्मदनोद्दीपनं विधाय तद्पूरणमयुक्तं क्रियत इति धिगेनमिति मर्यादोल्लङ्घनध्वननं च यथा तथैवावतस्थ इत्यन्वयः । 'तूष्णीमर्थे सुखे जोषम्' इत्यमरः । 'जोषं सुखे प्रशंसायां तूष्णीलङ्घनयोरपि' इति कोशान्तरमपि । यद्वा जुषित्वा जुषित्वा पुनः पुनः संसेव्येत्यर्थः । शेषं तु प्राग्वदेव । तस्मात्त्वया दूरं नैव स्थातव्यम् । किं तु तल्प आगत्य मद्रतिसंपूर्तिरेव विधेयेत्याशयः । अत्र क्षुब्धा मध्या स्वकीया परकीया वा नायिका । विनोदी नायकः । संभोगः शृङ्गारः । श्लेषोऽलंकारः ॥

**गुरुभिः परिवेल्लितापि गण्ड-**
**स्थलकण्डूयनचारुकैतवेन ।**
**दरदर्शितहेमबाहुनाला**
**मयि बाला नयनाञ्चलं चकार ॥ १७ ॥**

गुरुभिरिति । श्वश्रूप्रभृतिभिः । पूज्यैरित्यर्थः । परिवेल्लितापि । अभिव्याप्तापीत्यर्थः । 'परिवे-

ष्ठिता' इत्यपि पाठः । अपिनानुरागातिशयो व्यज्यते । गण्डेति । कपोलपालिकण्डूपनयनलक्षणरम्यमिषेणेति यावत् । एतेन चातुर्यातिशयः सूचितः । दरेति । ईषत्प्रकाशितकूर्परोर्ध्वकञ्चुक्यनावृत्तभुजकनकपुण्डरीकवृन्तेत्यर्थः । एतेन सुरताभिलाषः सौन्दर्योत्कर्षश्च द्योत्यते । एतादृशी बाला निरुक्तनायिका मयि नयनाञ्चलं लोचनपल्लवम् । संभोगदानसूचकं कटाक्षमित्यर्थः । अत्र लुप्तोपमालंकारः । अन्यत्सर्वं प्राग्वदेव ॥

**गुरुमध्यगता मया नताङ्गी**
**निहता नीरजकोरकेण मन्दम् ।**
**दरकुण्डलताण्डवं नतभ्रू-**
**लतिकं मामवलोक्य घूर्णितासीत् ॥ १८ ॥**

गुर्विति । अत एव । नतेति । मया । नीरजेति । कमलमुकुलेनेत्यर्थः । त्वत्कुचतोऽयं न्यूनोऽधिको वेति परीक्ष्यतामिति विनोदो द्योत्यते । मन्दं निहता । अन्यैरविज्ञातं यथा तथाभिहतेत्यर्थः । एतादृशी सती सा । दरेति । ईषत्ताटङ्कनटनं यथा तथा । नतेति । नम्रभ्रूवल्लिकं च यथा तथेत्यर्थः । क्रियाविशेषणद्वयेनानेन क्रमादावेगविनयौ ध्वनितौ । एवं मामवलोक्य घूर्णिता कम्पिता । एतेन किमिदमकार्यसमीक्ष्यैव प्रेक्षावद्भिरपि भवद्भिरित्याक्षेपो ध्वनितः । अत्रापि रूपकमलंकारः । शेषं तु प्राग्वदेव ॥

एवं संप्रेरितसख्युपदेशादागतां सीतां प्रति श्रीरामो राधां प्रति वा श्रीकृष्णः किंचिदुपालभते—

**विनये नयनारुणप्रचारा**
**प्रणतौ हन्त निरन्तराश्रुधारा ।**
**अपि जीवितसंशया प्रयाणे**
**नहि जाने हरिणाक्षि केन तुष्येः ॥ १९ ॥**

विनय इति । अयि हरिणाक्षि, त्वयि मया विनये कृते सति तव । नयनेति । अरुणस्य शोणवर्णस्य यः प्रचारोऽरुणप्रचारः । नयनयोररुणप्रचारो यस्याः सा तथा । कुपिता भवसीत्यर्थः । तर्हि विनयकापथ्यसंभवभञ्जको नमस्कारः कार्य इत्यत्राह—प्रणताविति । हन्तेति खेदे । निरन्तरेति । निरन्तरमश्रुधारा यस्याः सा तथा । रुदिता भवसीत्यर्थः । तर्ह्युपेक्ष्येत्यत आह—अपीति । प्रयाणे मया गमने क्रियमाणे सति तु । जीवितेति । जीवितस्य संशयो यस्याम् । एतादृशी संदिग्धजीवितापि भवसीत्यर्थः । अतस्त्वं केनोपायेन तुष्येः संतुष्यसीत्यहं नहि जाने नैव जानामीति योजना । एतेन मौग्ध्या धैर्यानुरागा व्यज्यन्ते । 'प्रसाराः,' 'धाराः,' 'संशयः,' इति पाठे तु तव भवन्तीत्याद्यध्याहृत्यैव योज्यम् । शेषं तूक्तार्थमेव । अत्र मध्या संबोध्या स्वकीयादिरेव नायिका । लुप्तोपमालंकारः । उक्तमेवान्यत् ॥

इत्थमुपालम्भवाक्येन पुनः कुपितायां सीतायां राधायां वा सत्यां श्रीरामः श्रीकृष्णो वा तल्पनिकट एवानल्पखिन्नत्वेन प्रसुप्तः सन्स्वप्ने तां तथाविधां दृष्ट्वासौ प्रबुद्धः स्वनिकटस्थितामिव मूर्तिमतीं निद्रां प्रकल्प्य निरुक्तनायिकासंभाषणलाभजनकत्वेन तां स्तौति—

**अकरुण मृषाभाषासिन्धो विमुञ्च ममाञ्चलं**
**तव परिचितः स्नेहः सम्यङ्मयेत्यभिधायिनीम्।**
**अविरलगलद्बाष्पां तन्वीं निरस्तविभूषणां**
**क इह भवतीं भद्रे निद्रे विना विनिवेदयेत् ॥ २० ॥**

अकरुणेति । हे भद्रे वक्ष्यमाणनायिकासंभाषणसुखदातृत्वेन कल्याणि निद्रे, । तन्वीं निसर्गकृशाङ्गीम् । प्रेयसीमित्यर्थः । एतेन प्रकृतप्रणयप्रकोपप्रकर्षप्राकट्ये प्रयुक्तविरहवैवश्यकार्श्यातिशयस्य कैमुत्यसिद्धत्वं ध्वनितम् । कोऽलौकिकगुणकश्चेतनादिसाधारणः पदार्थः । भवतीं विना त्वामन्तरा विनिवेदयेत् । विशेषेण वक्ष्यमाणभाषणपूर्वकत्वलक्षणेन तत्रापि नितरां बहुकालम्, न तु क्षणमात्रं वेदयेज्ज्ञापयेदित्यर्थः । मां प्रतीति शेषः । न कोऽप्यन्यस्त्रिभुवनेऽपीत्यार्थिकम् । ननु दृश्यत एव भवता भवत्प्रियाप्रायः सततमेवेति कोऽत्र मया स्वप्नतो विशेषः संपादित इत्यतस्तां विशिनष्टि—अकरुणेत्यादिना त्रिभिः । रे अकरुण । एवं च कथमेतावत्कालं मत्प्रसादनोपेक्षा स्वानुमानेन मन्मथव्यथाविदापि भवता भावितेत्याक्षेपः सूच्यते । न च मया त्वत्प्रियसखीप्रार्थनाशतमेव त्वत्प्रसादनार्थं कृतम्, न तूपेक्षापीत्याक्षेप्यम् । अप्रामाणिकत्वादित्याह—मृषेति । एतेन धूर्तत्वं ध्वन्यते । सिन्धुपदेन त्रैकालिकानाश्वसनीयवचनत्वं माधुर्यगन्धविधुरत्वं च । अत एव त्वं ममाञ्चलं बलात्कारेण धृतं वसनपल्लवं विमुञ्चेति संबन्धः । अहो स्नेहादेव मयाञ्चलो धृतः, न तु बलात्कारेणेत्यत्राह—तवेति । मया तव स्नेहः सम्यक्परिचित इत्यभिधायिनीं वदन्तीमिति योजना । एतेन यदि सम्यक्स्नेहः स्यात्तर्हि कथमेतावत्कालविरहः सुसहः स्यादित्यादितर्कस्तर्क्यते । तेन परमतिरस्कारो व्यज्यते । अतएव । अविरलेति । सततस्खलदश्रुधारामित्यर्थः । एतेनात्यसह्याधित्वं ध्वन्यते । तत्रापि 'धनेन कान्ताम्' इत्युक्तेर्नवभूषणसमीहाया नवोढाचेष्टात्वोक्तेश्च मया चूडामण्यादेर्भूषणस्य प्रदाने कृतेऽपि नैव प्रससादेति व्यनक्ति—निरस्तेति । ऋजवस्तु त्यक्तस्वाङ्गीणाभरणामिति विवरिष्यन्ति । इह कुपिता स्वीयादिर्मध्यैव नायिका । तत्परो नायकः । स्वप्नो व्यभिचारी भावः । विप्रलम्भ एव शृङ्गारः । परिकरकाव्यलिङ्गादयोऽलंकाराः । हरिणीवृत्तम् । तदुक्तम्—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति ॥

अथैवं प्रेयोवाक्यमाकर्ण्य तत्प्रेमदार्ढ्यावधारणेन सद्यः सुप्रसन्नया प्रेयसा सह यथेच्छं सुरतसुखमुपभुज्य प्रातः सकलस्नानप्राक्कालिककृत्योत्तरं सरयूं कालिन्दीं वा स्नातुमागतां सीतां राधां वालक्ष्य श्रीरामः श्रीकृष्णो वा तदर्थमेव तत्रैवागतः संस्तीरवर्तिन्यास्तस्याः

स्वप्रियदर्शनेनातिप्रसन्नं वदनारविन्दं तथा विकासोन्मुखं नीरवर्ति कमलं प्रत्यपि मकरन्दलोभवशादुभयत्रापि धावमानां भ्रमरकिशोरसरणिमवलोक्य तन्मौग्ध्यं स्वमनसेव वर्णयति—

**तीरे तरुण्या वदनं सहासं**
**नीरे सरोजं च मिलद्विकासम् ।**
**आलोक्य धावत्युभयत्र मुग्धा**
**मरन्दलुब्धालिकिशोरमाला ॥ २१ ॥**

तीर इति । रे मनः, इयमलिकिशोरमाला मुग्धा भ्रान्ता भवति । तथा त्वं मा भव । किंतु विवेकेन स्वरमण्यानन एव संसक्तं भवेति भावः । कुतोऽस्या भ्रान्तिरवधार्यत इति चेत्तत्राह—यत इयं तीरे तरुण्याः सहासं वदनं नीरे मिलद्विकासं सूर्योदयवशात्प्राप्तसंफुल्लभावं सरोजं चालोक्य मरन्दलुब्धा सत्युभयत्रापि धावतीति संबन्धः । अत्र किशोरपदं हि भ्रमयोग्यतार्थम् । एवं च तदानने पद्मान्न्यूनानतिरिक्तत्वं व्यज्यते । इह मध्या मुदिता स्वकीया परकीया वा नायिका । दृष्टो नायकः । कटाक्षादिसंभोग एव शृङ्गारः । भ्रान्त्यादिरलंकारः । यद्येकस्या अलिकिशोरमालाया ऐककालिकोभयकर्मकधावनक्रियासंभवविभावनमर्धजरतीयानौचित्याच्चेत्सह्यस्तु कालभेदेन यद्यदा प्रथमं सौरभ्याद्याधिक्यलक्षणपद्मिनीजात्यधर्मतः सीतादिमुखे धावत्यसौ तदा तत्रापि नेत्रादिपद्मवैधर्म्यघटकांशदर्शनतस्ततः परावृत्य पुनः सरोजे धावति तत्रापि तादृक्सौगन्ध्यालाभात्ततोऽपि पुनः परावृत्य तत्र धावतीत्यतः संदेहादिरेवासाविति रहस्यम् ॥

ततः श्रीकृष्णः कुञ्जादौ निश्यन्यां गोपयुवतिमुपभुज्य राधिकासंकेतितमालतीकुञ्जे निशीथे समागतस्तया प्रत्युद्गमनादिना सत्कृतश्च तदनन्तरं राकाचन्द्रिकायां तमालिङ्गितुं तत्स्कन्धे संस्थापितापि निजभुजकल्पलतामञ्जरी तद्वक्षसि स्वशत्रुभूतगोपयुवत्यन्तरकृतगाढालिङ्गनप्रसङ्गसंपन्नमौक्तिकस्रग्जनितत्वगादिनिकोचनचिह्नमवलोक्य सद्यःकुपितया तया तत्क्षणादेवाकृष्टेति कविस्तत्कोपचापल्यं प्रकाशयति—

**वीक्ष्य वक्षसि विपक्षकामिनी-**
**हारलक्ष्म दयितस्य भामिनी ।**
**अंसदेशविनिवेशितां क्षणा-**
**दाचकर्ष निजबाहुवल्लरीम् ॥ २२ ॥**

वीक्ष्येति । अत्र कामिनीत्युक्तचिह्नहेत्वर्थम् । एवं दयितपदं प्रियत्वसूचनात्तदंसदेशे स्वबाहुलतानिधानयोग्यताध्वननार्थम् । तद्वद्वल्लरीपदमपि तस्यामतिसौकुमार्यद्योतनार्थमेव बोध्यम् । स्पष्टमेवान्यत् । इह परकीया मध्या खण्डिता नायिका । वञ्चको नायकः । विप्रलम्भः शृङ्गारः । लुप्तोपमादिरलंकारः ॥

एवं कुपितायां राधिकायां सत्यां तत्प्रसादनार्थमन्येद्युस्तत्सखीं समुत्कण्ठयितुं श्रीकृष्ण-स्तल्लीला एव सुरतादिरूपाः स्मृत्वा संवर्णयति—दरानमदित्यादिचतुर्भिः ।

**दरानमत्कंधरबन्धमीष-**
**न्निमीलितस्निग्धविलोचनाब्जम् ।**
**अनल्पनिःश्वासभरालसाङ्गं**
**स्मरामि सङ्गं चिरमङ्गनायाः ॥ २३ ॥**

अत्र प्रतिपद्यं हे सखीति संबोधनाध्याहारो बोध्यः । अहमङ्गनायाः प्रकृताया राधिकायाः सङ्गं संभोगं चिरं स्मरामीति योजना । तत्र हेतुं द्योतयितुं विशिनष्टि—दरेत्यादि-त्रिभिः । दरमीषदानमन्ती कंधरा 'शिरोधिः कंधरेत्यपि' इत्यमराद्ग्रीवा यत्र तादृशो बन्धः पुरुषायिताभिधः सुरतरचनाविशेषो यस्मिंस्तत्रैव तत्संभवात्तमित्यर्थः । अत एव । ईषदिति । स्निग्धपदेनानन्दाश्रुसद्भावो व्यज्यते । किं चेतोऽपि तत्र विपरीतरतत्वमेवेति व्यनक्ति—अनल्पेति । अङ्गं शरीरम् , न तु हस्ताद्यवयवाः । तस्मादेतादृगनुपमसुखदां तां त्वं द्रुतं प्रसादयैवेत्याकूतम् । इह स्मर्यमाणा प्रमत्ता मध्या परकीयैव नायिका । प्रकृता तु कुपितैव । उत्कण्ठितो नायकः । विप्रलम्भः शृङ्गारः । उक्त एवालंकारः ॥

**रोषावेशान्निर्गतं यामयुग्मा-**
**देत्य द्वारं कांचिदाख्यां गृणन्तम् ।**
**मामाज्ञायैवाययौ कातराक्षी**
**मन्दं मन्दं मन्दिरादिन्दिरेव ॥ २४ ॥**

रोषेति । कोपवेगान्निर्गतं बहिर्गतम् । ततो यामयुग्मात्प्रहरद्वयादनन्तरम् । द्वारं तन्मन्दिर-द्वारमेत्यागत्य । कांचित्तत्सखीं प्रत्याख्यां निरुक्तमद्रोषकारणकथाम् । गृणन्तम् । जल्पन्तमित्य-र्थः । एतादृशं मामाज्ञायैव निरुक्तशब्दलिङ्गेन ज्ञात्वैव । कातराक्षी प्रकृतमद्रोषवशाद्भीतचकि-तलोचना राधेत्यर्थः । मन्दिराद्गृहागारादिन्दिरेव लक्ष्मीरिव सर्वांशरम्या मन्दंमन्दमाय-यावीषद्बहिराजगामेत्यन्वयः । एतेनार्जवौत्कण्ठ्यभीतिप्रीतिप्रणत्यादयो द्योत्यन्ते । अत्रोत्सु-का मध्या परकीया नायिका । उपमालंकारः । शेषं प्राग्वत् । शालिनीवृत्तम् । तदुक्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति ॥

**हृदये कृतशैवलानुषङ्गी**
**मुहुरङ्गानि यतस्ततः क्षिपन्ती ।**
**प्रियनामपरे मुखे सखीना-**
**मतिदीनामियमादधाति दृष्टिम् ॥ २५ ॥**

हृदय इति । अनुषङ्गः संबन्धः । सखीनां मुखे त्वत्प्रियः श्रीकृष्णः समागत इति प्रियनामपरे

सति । इयं बुद्धिस्थत्वेन प्रत्यक्षा राधिका । तत्रेत्यध्याहारः । निरुक्तसखीमुख इत्यर्थः । अतिदीनां दृष्टिमादधाति, न त्वादधाविति योजना । तेन स्वस्य रसपारवश्याद्भूतमपि तद्वृत्तं वर्तमानमिव भातीति ध्वन्यते । एवं च तस्या विरहलीलोत्कर्षः प्रतिबोधितः । तेनास्यां सौहार्दातिशयः सूचितः । इह विरहिणी नायिका । शेषं तु पूर्ववदेव । काव्यलिङ्गमलंकारः ॥

**इत एव निजालयं गताया**
**विनताया गुरुभिः समावृतायाः ।**
**परिवर्तितकंधरं नतभ्रू**
**स्मयमानं वदनाम्बुजं स्मरामि ॥ २६ ॥**

इत एवेति । पुरोवर्तिदेशत एव । वैनत्ये हेतुः—गुरुभिरिति । 'वनितायाः' इति पाठस्तु सरल एव । एतादृश्या राधायाः । परीति । वलितग्रीवम् । नतेति । नते भ्रुवौ यत्र । अत एव स्मयमानं स्मितयुतम् । एतादृशम् । वदनेति । मुखाब्जमित्यर्थः । एतेन ह्रीप्रीत्यौ द्योत्येते । इह सलज्जोत्कण्ठा नायिका । लुप्तोपमादिरलंकारः । शेषं प्राग्वत् ॥

अथ निरुक्तसखीसमक्षमेव वसन्तागमव्यञ्जकमलयानिलाद्युद्दीपनविभावासहिष्णुतां कथयन्श्रीकृष्णो राधिकाप्रसादनत्वरां सूचयति—

**कथय कथमिवाशा जायतां जीविते मे**
**मलयभुजगवान्ता वान्ति वाताः कृतान्ताः ।**
**अयमपि खलु गुञ्जन्मञ्जु माकन्दमौलौ**
**चुलकयति मदीयां चेतनां चञ्चरीकः ॥ २७ ॥**

कथयेति । अयि सखि, मे जीविते न तु धनादौ । तेन त्वयाधुना तत्प्रसादने विलम्बलेशोऽपि न कार्य इति व्यज्यते । आशा संभावनापि । तेन वस्तुतस्तन्नैव स्थास्यतीत्यतिवैक्लव्यं ध्वन्यते । कथमिव जायतामिति त्वमेव कथयेति संबन्धः । किमिति तत्संशयस्तत्राह—मलयेत्यादिना । तेन तेषु दाहकत्वानुमितं विषसंपृक्तत्वं ध्वन्यते । मलयाचलचन्दनसंबन्धित्वेन शीतादिमत्त्वं त्वविनाभावसिद्धमिति बोध्यम् । अत एव विरहिणो मे । कृतान्ताः 'कृतान्तो यमुनाभ्राता' इत्यमरान्मृत्यवः । एतादृशा वाताः पवना वान्ति । प्रसरन्तीत्यर्थः । न केवलमेतावदेव किंत्वन्यदपि तथेति कथयति—अयमपीति । अयं प्रत्यक्षश्चञ्चरीको भ्रमरोऽपि माकन्दमौलौ प्रफुल्लाम्रशिखरे मञ्जु मधुरं गुञ्जन्सन्मदीयां चेतनां 'प्रतिपज्ज्ञप्तिचेतना' इत्यमराद्विवेकसाधनीभूतां बुद्धिमपि चुलकयत्याचामति खल्विति योजना । एवं च विवेकसामग्र्या अप्यभावः सूचितः । तस्मात्त्वयातित्वरयैवासौ प्रसादनीयैवेत्याशयः । अत्र कुपिता मध्या परकीयैव नायिका । विरही नायकः । विप्रलम्भः शृङ्गारः । काव्यलिङ्गादिरलंकारः । मालिनीवृत्तमिदम् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥

पुनस्तल्लीलान्तरमेव श्रीकृष्णस्तत्सखीं प्रति कथयंस्तत्प्रसादन एव त्वरयति—

निरुद्ध्य यान्तीं तरसा कपोतीं
कूजत्कपोतस्य पुरो दधाने ।
मयि स्मितार्द्रं वदनारविन्दं
सा मन्दमन्दं नमयांबभूव ॥ २८ ॥

निरुध्येति । हे सखि, कदाचिद्यान्तीं पलायमानां कपोतीं 'पारावतः कलरवः कपोतः' इत्यमरात्कलरवाख्यां पक्षिणीं निरुद्ध्य कराभ्यां धृत्वा । कूजत्कपोतस्य । सुरतार्थे रुतविशेषं कुर्वतस्तद्भर्तुरित्यर्थः । पुरोऽग्रभागे दधाने स्थापयति । एतादृशे मयि सतीति यावत् । सा पूर्वप्रकृता राधिका । स्मितेति । स्मेरसुधयातिस्निग्धीकृतमित्यर्थः । एतादृशम् । वदनेति । मुखकमलम् । मन्दं मन्दं शनैः शनैर्यथा स्यात्तथा । नमयांबभूव नम्रीचकारेति संबन्धः । एतेन तस्या अपि तात्कालिकसुरतौत्कण्ठ्यं संपन्नमिति व्यज्यते । तस्माद्यथाधुनाप्येवं स्यात्तथा भवत्या अवश्यं भावनीयमिति भावः । इह लीलाशालिनावेव स्मर्यमाणनायिकानायकौ । प्रकृतौ तु तौ कुपितावियुक्तावुक्तावेव । विप्रलम्भ एव शृङ्गारः । यद्यपि स्मर्यमाणस्य तस्य संभोगारम्भरूपस्य संभवेऽपि वर्तमानत्वाभावात् । लुप्तोपमादिरलंकारः ॥

अथैकविंशतिश्लोकवर्णितवदनां सीतां प्रति श्रीरामः पूर्वश्लोकषड्रीत्या संप्रेषितसखीप्रार्थनशतैरभिसृतां राधिकां प्रति श्रीकृष्णो वा सायं तद्वदनस्य राकानिशाकरत्वध्वननेन परितोषयति—

तिमिरं हरन्ति हरितां पुरःस्थितं
तिरयन्ति तापमथ तापशालिनाम् ।
वदनत्विषस्तव चकोरलोचने
परिमुद्रयन्ति सरसीरुहश्रियम् ॥ २९ ॥

तिमिरमिति । अयि चकोरलोचने । एतेन त्वन्मुखस्य निष्कलङ्कत्वापरिक्षीणत्वादिना चकोरमिथुनमेव नयनच्छद्मनात्रैवागत्य विहरतीति द्योतितम् । तव वदनत्विषो मुखकान्तयः । हरितां दिशां पुरःस्थितमग्रभागवर्ति तिमिरं हरन्तीत्यन्वयः । एवं तर्हि किं मन्मुखस्य सूर्यत्वमुत्प्रेक्ष्यते । तत्त्वनुचितं तस्य तापकत्वादस्य तु तच्छामकत्वादित्यत आह—तिरयन्तीति । अथ प्रथमप्रसारतस्तिमिरहरणानन्तरमित्यर्थः । तापशालिनां त्रिविधतापवतां न तु कामज्वरातुराणाम् । तथात्वे बहुवचनात्सामान्यवनितात्वापत्तिः । तापं तिरयन्त्यपसारयन्तीति योजना । अथापि जीवन्मुक्तमुखमयूखेष्वतिव्याप्तिरत आह—परीति चरमचरणेन । सरसीति । कमलशोभामित्यर्थः । परिमुद्रयन्ति मुकुलीकुर्वन्तीति संबन्धः । तस्माद्धन्योऽहमद्य त्वदाननदर्शनेनैवेत्याशयः । अत्र मध्या स्वकीया परकीया वाभिसारिका

नायिका । मुदितो नायकः । संभोगारम्भ एव शृङ्गारः । व्यङ्ग्यमर्यादासिद्धाभेदरूपकमलंकारः । मञ्जुभाषिणीवृत्तम्—'सजसा जगौ भवति मञ्जुभाषिणी' इति ॥

एवं स्तुतावपि लोचनयोश्चकोराद्यधिकसौन्दर्यगर्ववत्त्वेन तदुपमानप्रदानादेव पुनः कुपितायां सीतायां राधिकायां वा सत्यां पुनरपि तत्प्रसादनार्थं तत्सखीं प्रति श्रीरामः श्रीकृष्णो वा तल्लीलादिकमेव वर्णयंस्तदानयनौत्कण्ठ्यं व्यनक्ति कुचेत्यादि द्वाभ्याम्—

**कुचकलशयुगान्तर्मामकीनं नखाङ्कं**
**सपुलकतनु मन्दं मन्दमालोकयन्ती ।**
**विनिहितवदनं मां वीक्ष्य बाला गवाक्षे**
**चकितनतनताङ्गी सद्म सद्यो विवेश ॥ ३० ॥**

भो सखि, इयं यदा बालासीत्तदा । कुचकलशेति । स्तनकनककलशद्वयमध्यस्थमित्यर्थः । मामकीनम् । मया प्राथमिकसुरतसंपादितत्वान्मत्संबन्धीत्यर्थः । एतादृशं नखाङ्कं नखक्षतम् । सेति । पुलकै रोमाञ्चैः सहिता तनुः शरीरलता यथा स्यात्तथेत्यर्थः । मन्दं मन्दं शनैः शनैः । आलोकयन्ती द्वितीयदिवसे तृतीययामे चतुर्थभूमिकास्थितपञ्चबाणविहारस्थान आलोकयन्ती सती दैवादकस्मादागतत्वेन तत्कालं षष्ठभूमिकास्थिते गवाक्षे वातायने विनिहितवदनं मां वीक्ष्य । चकितेति । आकस्मिकदर्शनतो विस्मितं तत एव नतनतं नम्रादपि नम्रमतिविलीनमङ्गं शरीरं यस्याः सा तथेत्यर्थः । शरीरस्य विस्मितत्वं हि तन्मुद्राशालित्वादेव । एवं चाश्चर्यलज्जोत्कर्षौ द्योतितौ । एतादृशी सती सद्यस्तत्कालमेव सद्म सुरतान्तःपुरं विवेशेत्यन्वयः । तस्मादधुना त्वियं मध्या भवतीत्यस्याः सुखप्रसादनं कैमुत्यसिद्धमेवेत्यतस्तदेव झटिति विधेयमित्याशयः । इह स्मर्यमाणा मुग्धा स्वकीया परकीया वा । प्रकृता तु कुपितैव नायिका । आतुरो नायकः । संभोगैकदेशः स्मर्यमाणः प्रकृतो विप्रलम्भ एव शृङ्गारः । काव्यलिङ्गादिरलंकारः ॥

**विधाय सा मद्वदनानुकूलं**
**कपोलमूलं हृदये शयाना ।**
**तन्वी तदानीमतुलां बलारेः**
**साम्राज्यलक्ष्मीमधरीचकार ॥ ३१ ॥**

विधायेति । हे सखि, सा प्रकृता सीता राधिका वा । यदा । मदिति । चुम्बनार्थं मन्मुखसमीपम् । कपोलेति । गण्डस्थलम् । विधाय कृत्वा हृदये मदुरसि शयाना निद्रितासीत् । विपरीतरतसमाप्तौ मद्वक्षस्येवोक्तरीत्या निद्राणा बभूवेति भावः । ननु कथं न भवते तस्या भारः संपन्न इत्याशङ्कां शमयति—तन्वीत्याद्युत्तरार्धेन । तन्वी यतः स्वभावत एव कृशाङ्ग्यतः कमलमालायमाना सा प्रकृतनायिका तदानीम् । निरुक्तशयनावसर इत्यर्थः । बलारेः । 'बलारातिः शचीपतिः' इत्यमरात्पौलोमीरमणस्येत्यर्थः । तत्राप्यतुलां निरुपमामपि ।

साम्राज्येति । अधरीचकार तुच्छतां निनायेत्यन्वयः । तस्मात्किं वर्णनीयं तत्सौन्दर्यादीत्य-तस्त्वयासौ झटिति वशीकरणीयैवेत्याशयः । अत्र प्रतीपविशेषादिरलंकारः । अन्यत्सर्वं प्राग्वदेव ॥

अथ पूर्वरात्रावेतद्विरहवशाद्यामत्रयं मम निद्रैवादौ नागता । यदा पुनश्चतुर्थयामे दैवा-दसावागता तदापि पुनः स्वप्न इमामेव प्रार्थयन्नेतत्प्रसादात्प्रागेव जागरूकोऽभवमिति धि-ग्दैवं मन्दभाग्यस्य यदहं निरुक्तनायिकाप्रसादं स्वप्नेऽपि नान्वभूवमिति निर्वेदं द्योतयं-स्तस्यां स्वेष्टसाधकं कारुण्यमङ्कुरयति—

**मुहुरर्थितयाद्य निद्रया मे**
**बत यामे चरमे निवेदितायाः ।**
**चुबुकं सुदृशो मृशामि याव-**
**न्मयि तावन्मुदितोऽपि निर्दयोऽभूत् ॥ ३२ ॥**

मुहुरिति । भो सखि, अद्य मुहुरर्थितया । त्वं मां प्रति प्रेयसीं सुप्रसन्नां शपथपूर्वकमवश्यं दर्शयेति शतशः प्रार्थितयेत्यर्थः । एतादृश्या निद्रया सुप्त्या । बतेति खेदे । चरमे चतुर्थे, न तु प्रथमादावपि । एतेन यामत्रयं निरुक्तविरहवैवश्यात्सुषुप्तिनाश एव संपन्न इति सूचि-तम् । एतादृशे यामे । प्रहर इति यावत् । मे निवेदितायाः । स्वप्नद्वारा मह्यं प्रदर्शिताया इ-त्यर्थः । एतादृश्याः सुदृशः प्रकृतमृगाक्ष्याः । एतेन रोषदशायामपि स्वप्नेऽपि नेत्रयोः क्रौ-र्याभावो रतिहेतुर्व्यक्त एव । चुबुकं हनुं यावन्मृशामि । अयि प्रिये, त्वं किमित्यधः पश्यसि । सुप्रसादेन वद सहास्माभिरिति । लालनपूर्वकमाननोन्नमनार्थं कराङ्गुलिभिरभिमृशामीति या-वत् । तावत्तत्क्षण एव मयि विषये मुदितोऽपि निरुक्तस्वप्रदर्शकत्वेन सुप्रसन्नोऽपि । नि-र्दयो जाग्रदवस्थापादकत्वान्निष्ठुरोऽभूदिति संबन्धः । विधिरिति शेषः । निरुक्तावस्थाघा-तकत्वेन दुर्जनत्वादेव मूले वक्त्रा तन्नामाग्रहो गुण एवेति बोध्यम् । 'मुदिरोऽपि' इति पाठे तु मुदिरपदवाच्यमेघेन गर्जनतस्तन्निद्राभङ्गः संपादित इति न काप्यनुपपत्तिः । तस्माद्यः पूर्वं व्यावहारिको यश्चायं प्रातिभासिकश्च मद्विघातः संपन्नस्तं त्वमेव पारमार्थिकं तत्प्रसा-दनं संपाद्य शामयेत्याशयः । इह विषादनमलंकारः । तदुक्तम्—'इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् । दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥' इति । शेषं तु पूर्ववदेव ॥

ननु किमेवं भवादृशां प्रौढानामपि कान्तैकरत्या दुःखित्वौचित्यम् । उक्तं हि कविसमयेऽपि— 'विपुलपुलिनाः कल्लोलिन्यो नितान्तपतज्झरीमसृणितशिलाः शैलाः सान्द्रद्रुमा वनभूमयः । यदि परिचयो वैयासक्यां बुधैश्च समागमः क्व पिशितवसामय्यो नार्यस्तदा क्व च मन्मथः ॥' इति । तस्माद्विचार एव कार्य इति वदन्तीं सखीं प्रति श्रीरामः श्रीकृष्णो वा समहाभारत-वेदपञ्चकोपलक्षितयावच्छब्दब्रह्मपरिशीलनेऽपि तत्रत्यमेकमद्वितीयब्रह्मलक्षणमर्थजातमपि तथा संतापशान्तिं नैव विरचयति यथायं रतान्तश्रान्तायाः प्रकृतकान्तायाः पुनः सुरतार्थं प्रार्थने मया क्रियमाणे सति मुखमयूखसखो नकारोऽपीति प्रतिवदति—

श्रुतिशतमपि भूयः शीलितं भारतं वा
विरचयति तथा नो हन्त संतापशान्तिम् ।
अयि सपदि यथायं केलिविश्रान्तकान्ता-
वदनकमलवल्गत्कान्तिसान्द्रो नकारः ॥ ३३ ॥

श्रुतीति । अत्र संतापशान्तिं विरचयतीत्युत्तरार्धेऽप्यनुकर्षणीयम् । वदनेति । वल्गन्त्या-न्दोलनेन चलन्ती या कान्तिः प्रभा तया सान्द्रः । निबिड इत्यर्थः । एतादृशो नकारोऽपीति योज्यम् । कान्तिवशीकृते चक्षुषि नकारग्रहणे श्रोत्रस्य प्रवृत्त्यवसरशून्यतैव संपद्यत इति सान्द्रपदेन द्योत्यते । एवं तथापदेन सपदिपदेन च मय्यप्युक्तरीत्या श्रुत्यादिकं निर्विषयान-न्दप्रदत्वेन संतापशान्तिं त्यागयोगादिसाधनपरिपाकतस्तनोत्येव तथा सद्यस्तादृक्साधन-मन्तरैव विषयानन्दप्रदानेन नैव संतापशान्तिं तनोतीति द्योत्यते । अत्र पूर्ववदेवेतरद्बिना रतश्रान्तनायिकाप्रतीपविशेषालंकारौ ॥

अथैवं सूचनतः सत्वरा सखी सामान्यतः कारणानभिज्ञेव सीताया राधाया वा निरु-क्तरोषवैवश्यजातविरहकृतपाण्डिमानं तां प्रत्येव वर्णयन्ती तत्प्रत्युत्तराकाङ्क्षां व्यनक्ति—

लवलीं तव लीलया कपोले
कवलीकुर्वति कोमलत्विषा ।
परिपाण्डुरपुण्डरीकखण्डे
परिपेतुः परितो महाधयः ॥ ३४ ॥

लवलीमिति । अयि सखि, तव कपोले कोमलत्विषा । एतेन रोषराहित्यं तत्काले ध्व-नितम् । लवलीं लीलयैव न त्वायासेन कवलीकुर्वति ग्रसति सति । परीति । अतिसि-तावदातजलजपुञ्ज इत्यर्थः । महाधयो महामनोव्यथाः परितः समन्तात्परिपेतुः संनिपेतु-रिति संबन्धः । तस्मात्किमेतत्कारणमित्युत्तरं देयम् । उत्तरिते च श्रीरामादिविरहरूपे कारणे मया तन्मार्जकोपायः समुपदिश्येतेत्याशयः । अत्र विरहिण्येव स्वकीया परकीया वा मध्या नायिका । विप्रलम्भः शृङ्गारः । काव्यार्थापत्तिरलंकारः । अत्र मालभारणीसु-न्दर्योर्मेलनादुपजातिविशेषो वृत्तम् ॥

तत उत्तरानवाप्तौ सीतासमक्षमेव तत्सखीं प्रति सति निकटवर्तिनि श्रीरामे तदवलो-कनसंकोचादिकं वर्णयति—

यौवनोद्गमनितान्तशङ्किताः
शीलशौर्यबलकान्तिलोभिताः ।
संकुचन्ति विकसन्ति राघवे
जानकीनयननीरजश्रियः ॥ ३५ ॥

यौवनेति । हे सखि । जानकीति । सीताक्षिपद्मलक्ष्म्यो राघवे विषये । यौवनेति । अतः संकुचन्ति । शीलेति । अतो विकसन्तीत्यन्वयः । एवं च तदनवलोकनेऽपि तत्सिद्धवत्कारः प्रसादनोपाय एवेति भावः । इह कुपिता मध्या स्वकीयैव नायिका । अनुकूलो नायकः । विप्रलम्भादिः शृङ्गारः । रूपकादिरलंकारः ॥

एवं विनोदतोऽप्यप्रसन्नायां जानक्यां सैव सखी पूर्वोक्तामेव तत्सखीं प्रत्यस्या एव परिहासान्तरमाचरन्ती सती श्रीरामस्यानन्तकल्याणगुणादिकरणत्वं व्यनक्ति—

**अधिरोप्य हरस्य हन्त चापं**
**परितापं प्रशमय्य बान्धवानाम् ।**
**परिणेष्यति वा युवा त्विदानीं**
**निरपायं मिथिलाधिनाथपुत्रीम् ॥ ३६ ॥**

अधिरोप्येति । हे सखि । हन्तेति खेदे । तु पुनः । एतेनेयं सीता तावत्पूर्वं श्रीरामेणोक्तरीत्या परिणीतैवैका जनककन्यकेति ध्वनितम् । इदानीं वर्तमानकाले, न तु कल्पान्तरे । तेनोक्तावतारस्य पुनः संभवेऽपि न क्षतिः । युवा यः कश्चिद्रामातिरिक्तो राजकुमारः । हरस्य शिवस्य चापं कार्मुकमधिरोप्य सज्जीकृत्य । तथा बान्धवानां स्वसंबन्धिनां परितापम् । कथमेवं दुर्घटो विदेहपणः कुमारेण पूरणीय इति संतापमित्यर्थः । प्रशमय्य क्षणमात्रेण दूरीकृत्य । तत्रापि निरपायं निर्बाधं यथा स्यात्तथा । एतेन युद्धादिव्युदासो ध्वन्यते । मिथिलेति । अन्यां कांचिज्जनककन्यकामिति यावत् । न तु पार्थिवीम् । एतस्यास्तु प्रागेव भगवता श्रीरामेण तथोद्वहनात् । परिणेष्यति वोद्वहिष्यति किम् । अपि तु नैवोद्वहिष्यतीत्यन्वयः । तस्मात्तादृग्गुणमणिगणमहार्णवः श्रीमत्किरणमालिकुलतिलकः श्रीरामचन्द्र एवेति तत्रापीयमेवमुदासीनेति पृथ्वीजन्यत्वेनौचित्येऽपि विदेहनन्दिनीत्वेनानुचितमेवेति तत्त्वम् । 'युवा न वायम्' इति पाठे त्वयं प्रत्यक्षः श्रीरामो नैव परिणेष्यति तथाप्यन्यः कश्चिद्युवा परिणेष्यति वेति काका व्याख्येयम् । शेषं तु प्राग्वदेव । इह परिकराङ्कुर एवालंकारः । शेषं प्राग्वदेव ॥

अथोक्तसखीवाक्यमाकर्ण्य पतिव्रतासीमन्तभूषणीभूतया सीतया निरुक्तपरिहासासहिष्णुत्वेन रोषोत्कर्षतः कम्प एव संपादिते सति पुनरपि सैव सखी प्राग्वदेव तत्सख्यन्तरं प्रति तद्विनोदमेव कुर्वन्ती सती तन्मौग्ध्यं ध्वनयति—

**भुजपञ्जरे गृहीता नवपरिणीता वरेण रहसि वधूः ।**
**तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम् ॥ ३७ ॥**

भुजेति । हे सखि, इयं जानकी वरेण श्रीरामेण । नवेति । नूतनोद्वाहिता । वधूर्जाया । अत एव । रहसि । भुजेति । बाहुद्वन्द्वरूपसारिकादिपक्षिरोधककाष्ठगृह इत्यर्थः । गृहीतालिङ्गिता । तत्कालेति । अकस्माद्वागुरागतेत्यर्थः । तत्रापि । बालेति । नूतनहरिणीव नि-

तरां वेपते कम्पत इत्यन्वयः। तस्मान्मध्याया एतस्याः परमसुखनिधाने भगवति विलासप्रधाने श्रीरामे रतिं प्रार्थयति सति नववधूरिव निरुक्तदृष्टान्तेन मृत्युपाशग्रस्तत्वारोपमिव मत्वा कम्पाद्याविष्करणमयुक्तमेवेत्याकूतम्। इहोपमालंकारः। अपरं तु सर्वं पूर्ववदेव॥

एवं शिथिलप्रयत्नाः सीताया राधाया वा सखीरालक्ष्य श्रीरामः श्रीकृष्णो वा स्मरज्वरातुरो नायिकातत्सखीसमक्षमेव मुक्तकण्ठं संजातसकलविवेककुण्ठं च शोचिति—

**उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता।**
**तदपि न हा विधुवदना मानससदनाद्बहिर्याति॥ ३८॥**

उपनिषद इति। हेति शोकारावसूचकम्। मयेति कर्त्रध्याहारो वक्तुर्विरहपारवश्यावद्योती। उपेति। परिपीतेति प्रमादो व्यज्यते। पेयवद्धृदये निहितेति यावत्। हन्तेति खेदे। गीतापि। सूतसंहितोक्तब्रह्मगीतापीत्यर्थः। शिवादिगीतयोरुक्तकथोत्तरकालिकत्वात्। एवं च श्रुतिस्मृत्युभयवैफल्यमेव जातमिति द्योतितम्। तदपीत्यादि सरलमेव। न यातीति संबन्धः। मनः सदा चन्द्राननामेव चिन्तयतीति तात्पर्यम्। तरुणीनां हि मन्दिराद्बहिर्याने सखीसुमङ्गलीसलिलसुमनःशशाङ्काद्यपेक्षैव निमित्तं प्रायः। तत्तूपनिषद्गीतामानसविधुपदैरेव श्लेषादिना सिद्धमेवेति युक्त एवोक्ततदभाव इति। अत्र स्वकीया परकीया वा मध्या क्रुद्धा नायिका। विरहविकलो नायकः। विप्रलम्भः शृङ्गारः। विशेषोक्तिरलंकारः। तदुक्तम्—'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे। हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि॥' इति॥

इत्थं श्रीरामस्य श्रीकृष्णस्य वा मारशरप्रहारपारवश्यजन्यशोकमाकलय्य सीतां राधां वा तत्सखी बलात्स्वकरे गृहीत्वा तत्सविधं निन्ये। ततोऽपि सातिमानवशान्नैव प्रससादेति कविर्वर्णयति—

**अकरुणहृदय प्रियतम मुञ्चामि त्वामितः परं नाहम्।**
**इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥ ३९॥**

अकरुणेति। सा विकला। अत एवालीजनस्य कराम्बुजमादाय। स्वकरेणावलम्ब्येत्यर्थः। अकरुणेति। एतावत्कालमुपेक्षकत्वात्। एतेन सख्यादिद्वारा प्रार्थने कारितेऽपि त्वया साक्षात्प्रणत्यादिना तन्नैव कृतमिति द्योतितम्। तर्हि त्वयाप्युपेक्ष्यतां तत्राह—प्रियतमेति। तर्ह्यालिङ्गय। नेत्याह—मुञ्चामीति। अहमितः परं त्वां मुञ्चामि तथाहमपि नैवास्मीति संबन्धः।'त्वद्वियोगान्नैव जीवामीति रहस्यम्। एवं चैतावत्कालं मया प्रतीक्षितम्। इतःपरं तु मदभिलषितसत्काराभावादहं पञ्च प्राणानेव पञ्चबाणसात्करोमीति व्यज्यते। हे प्रियतम, इतःपरमहं त्वां मुञ्चामीति योजनं त्वकरुणहृदयेति संबोधनरहस्यानवधाननिबन्धनमेव। इति निरुक्तप्रकारेण। आलपति भाषत इत्यन्वयः। बुद्धिस्थत्वाल्लट्। इह रूपकादिरलंकारः। शेषं तु प्राग्वदेव॥

अथैवं श्रीकृष्णे राधिकाप्रसादे नैराश्यमापन्ने ततोऽन्यत्र गते च सति तत्सखी तावद-

न्येद्युस्तां प्रति भेदाख्योपायान्तरमारचयन्ती तेन गोपतरुण्यन्तरप्रीतिः संपादितेति निवेदयति लोभादित्यादिद्वाभ्याम्—

**लोभाद्वराटिकानां विक्रेतुं तक्रमक्रममटन्त्या ।**
**लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥ ४० ॥**

अयि सखि राधिके, अद्य वराटिकानां कपर्दिकानां लोभात्तक्रं विक्रेतुमक्रमं यथेच्छमटन्त्या भ्रमन्त्या । गोपेति । 'कैशोरमापञ्चदशम्' इति वचनात्त्वत्तुल्यवयस्त्वं तस्यामप्यस्तीति न त्वया श्रीकृष्णप्राप्त्याशा कार्येति द्योत्यते । मध्येरथ्यं रथ्याया गोकुलप्रतोल्या मध्य इत्यर्थः । 'रथ्या प्रतोली विशिखा' इत्यमरः । महेन्द्रेति । इन्द्रनीलाख्यरत्नविशेषः श्रीकृष्णरूपो लब्धः प्राप्त इति योजना । त्वया त्वसावासोऽप्यपहारित इति तत्त्वम् । अत्र परकीयैव मध्या प्रकृता खिन्ना, अप्रकृता मुदिता च नायिका । तथैव नायकोऽपि । विप्रलम्भसंभोगाख्यौ शृङ्गारावपि । प्रहर्षणविशेषोऽलंकारः । उक्तं हि—'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् । दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥' इति । एवमक्रममित्यादौ स्वभावोक्तिर्महेन्द्रेति रूपकातिशयोक्तिरपि ॥

**रूपारुचिं निरसितुं रसयन्त्या हरिमुखस्य लावण्यम् ।**
**शिव शिव सुदृशः सकले जाता सकलेवरे जगत्यरुचिः ॥४१**

रूपेति । ततस्तस्याश्चन्द्रादियावद्रूपविषयका रुचिरेव संपन्ना । तान्निरसितुं हरिमुखस्वलावण्यम्, न तु सौन्दर्यम् । तेन हि लवणस्य भावो लावण्यं लवणमेव लावण्यमिति व्युत्पत्तितः श्लेषो विवक्षितः । तथा चारुचिनिरासार्थं लोके सैन्धवादि क्षारास्वादनं क्रियत इति प्रसिद्धमेव । न चात्र हरिमुखस्य लावण्यमिति रसयन्त्या इति च मुखसंबन्धि धर्मस्य क्षारत्वाद्राम्यार्थध्वननापत्तिरिति सांप्रतम् । तस्य तु प्रकृते पूर्वपद्यवर्णितवराटिकालुब्धगोपकिशोरीकर्तृकतक्रविक्रयाक्रमाटनवशसंपन्नरथ्यान्तः कृष्णरूपमहेन्द्रनीलमणिलाभलक्षणार्थस्य परमानुकूल्यात् । अत एव गोपकिशोरीत्वेन मौग्ध्यान्मधुरारोचकनिरासे तक्रादिवद्रसयन्त्या आस्वादयन्त्याः । चक्षुश्चषकाभ्याममृतवत्पिबन्त्या इति यावत् । अत एव सुदृशः । शिव शिवेति खेदे । सकलेवरे स्वदेहसहिते सकले जगत्यपि । अरुचिरेव जातेति संबन्धः । एतेन तस्या जीवन्मुक्तिरेव संपन्ना, त्वं तु शोकाकुलैव मौग्ध्येनेति ध्वनितम् । तस्मादद्यापि विचारः कार्य इति तात्पर्यम् । इह विषादनादिरलंकारः । शेषं तु पूर्ववदेव ॥

एवमुपायेनाभिसृतां राधिकां प्रति श्रीकृष्णः स्तौति—

**किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णवर्णमिति ।**
**तद्यदि पतति हुताशे तदा हताशे तुलां तवारोहेत् ॥ ४२ ॥**

किमिति । हे राधे, त्वम् । हन्तेति खेदे । ममाङ्गं सुवर्णवर्णमिति मुग्धतया मौढ्येन किं जल्पसीत्यन्वयः । तत्र हेतुः—तदिति । हतेति । हता नष्टाशा उक्तोपमाभिलाषो यस्या-

स्तत्संबुद्धौ। तत्सुवर्णं यदि हुताशेऽग्नौ पतति तदा तव। अङ्गस्येति शेषः। तुलामारोहेदिति संबन्धः। एवं च तप्तमेव काञ्चनं त्वदङ्गसमं न त्वन्यदित्याकूतम्। 'न वारोहेत्' इति पाठे तु तदापि तुलामारोहेन्न वेति संशय एव। हुताशपदेन तत्र तपो व्यज्यते । इह परकीयाभिसारिका मध्या नायिका । अनुकूलो नायकः । प्रतीपविशेषोऽलंकारः। संभोगारम्भः शृङ्गारश्च ॥

एवं महाप्रयत्नेन संपन्नसङ्गयोः श्रीकृष्णराधिकयोः परस्परावलोकनोत्सवं कविः स्तौति—

**औत्सुक्यात्परिमिलतां त्रपया संकोचमञ्चतां च मुहुः ।**
**नवसंगमयोर्यूनोर्नयनानामुत्सवो जयति ॥ ४३ ॥**

औत्सुक्यादिति । नवेति । भूरिकालोत्तरसंपन्नत्वेन नूतनः संगमो ययोस्तौ । तयोरित्यर्थः। अल्पकालेऽपि तत्त्वं तु परस्परविरहपरितापातिशयादेव बोध्यम् । एतादृशयोर्यूनोस्तरुणयोः। राधाकृष्णयोरित्यर्थः। सरल एव चरमचरणः । बहुत्वं तूभयसंबन्धित्वादेव। जये हेतुः। औत्सुक्यादित्यादिविशेषणाभ्याम्। कदा रहः सङ्गः स्यादित्यन्योन्यौत्कण्ठ्याद्धेतोरिति यावत्। परिमिलतां परितः सकलकिरणप्रेरणेन समन्ततो मिलन्ति संश्लिष्टीभवन्तीति तथा। तेषामित्यर्थः। तथा नवत्वादेव। त्रपया ह्रिया संकोचमञ्चताम्। स्वीकुर्वतामित्यर्थः। मुहुरित्युभयत्रापि योज्यम्। एवं चोक्तावलोकने लोकोत्तरत्वं व्यज्यते । इह काव्यलिङ्गादिरलंकार एवापरः। इतरत्तु सर्वं पूर्ववदेव ॥

अथ राधिका स्वसौन्दर्याद्युत्कर्षं द्योतयन्ती सामान्ययुवनिदर्शनतः श्रीकृष्णविनोदं व्यनक्ति—

**गरिमाणमर्पयित्वा लघिमानं कुचतटात्कुरङ्गदृशाम् ।**
**स्वीकुर्वते नमस्ते यूनां धैर्याय निर्विवेकाय ॥ ४४ ॥**

गरिमाणमिति। निर्विवेकाय यूनां धैर्याय ते नम इति योजना। अत्र प्रकृतधैर्यस्यान्यदीयत्वेनाप्रत्यक्षत्वेऽपि युष्मच्छब्दचतुर्थ्येकवचनादेशप्रयोगस्तु वक्त्र्याः स्वलावण्यादिगर्वप्रमादादेव बोध्यः। निर्विवेकत्वे हेतुः शेषेण। गरिमाणं स्वनिष्ठाचलत्वमहत्त्वादिधर्मम्। अर्पयित्वा कुरङ्गदृशां कुचतटाय दत्त्वेत्यर्थत एव फलति—कुरङ्गेति। कुचेति । लघिमानं तदपेक्षयापि लघुत्वम्। स्वीकुर्वत इति योजना । अयमाशयः—यदैव तरुणानां मनस्यस्या मृगाक्ष्याः कुचौ कनककमलकोरकाकाराविति तन्महत्त्वविषयको विकारः संपद्यते, तदैव महत्त्वभङ्ग इति। एतेन मत्कुचसौन्दर्यदर्शनेन सुदर्शनकरोऽपि त्वं मोहितोऽसीत्यहमेव धन्येति ध्वन्यते। अत्र सौन्दर्यगर्विता मध्या परकीयैव नायिका। अनुरक्तो नायकः। संभोगः शृङ्गारः। परिवृत्तिरलंकारः। तदुक्तम्—'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः। जग्राहैकं शरं मुक्त्वा कटाक्षान्स रिपुश्रियाम् ॥' इति ॥

एवं विनोदेन परितुष्टः श्रीकृष्णोऽपि राधिकां स्तौति न्यञ्चतीत्यादिद्वाभ्याम्—

**न्यञ्चति वयसि प्रथमे समुदञ्चति तरुणिमनि सुदृशः ।**
**दधति स्म मधुरिमाणं वाचो गतयश्च चारुतां च भृशम् ॥४५॥**

हे राधे, सामान्यतः सुदृशः सुन्दर्याः प्रथमे बाल्याख्ये वयसि न्यञ्चति न्यग्भावं ह्रासं गच्छति सति । तथा तरुणिमनि यौवने समुदञ्चति सम्यक्प्रकाशमाने च सति । वाचो वाण्यः । अर्थात्तस्या एव । मधुरिमाणं दधति स्म धारयामासुरेव । तथा गतयोऽपि मरालदन्तावलादिवत्सविलाससालसगमनान्यपि । भृशं चारुतां रम्यतां दधति स्मेत्यनुकृष्य योज्यम् । 'विभ्रमाश्च' इति पाठे विलासा अपीत्यर्थः । तथा च गतिमाधुर्यं तु प्राग्वदेव । विलासमाधुर्यं तु सकलयुववशीकर्तृत्वं बोध्यम् । तस्मात्त्रैलोक्यसुन्दर्यास्तव तु वागादौ तत्कैमुत्यसिद्धमेवेति भावः । तेनैवमेव विनोदोक्तयस्त्वया भूयो वक्तव्या इति द्योत्यते । परिकराङ्कुरोऽलंकारः ॥

**निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् ।**
**अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥ ४६ ॥**

निःसीमेति । निःसीममनन्तं शोभा सौभाग्यं यस्य । अमितसुषमैश्वर्यमित्यर्थः । एतादृशं तन्वङ्ग्याः कृशाङ्ग्या नयनद्वयम् । स्पष्टमन्यत् । उत्प्रेक्षालंकारः । अन्यदुभयत्रापि प्राग्वदेव ॥

अथैकोनचत्वारिंशच्छ्लोकोक्तरीत्या सीतयातीव रतिनिराशतां नीतः श्रीरामस्तत्समक्षमेव तत्सखीं प्रागनुभूतं तच्छीलोत्कर्षम्, पूर्वोक्ताव्यवहितश्लोकद्वयेन वाग्गतिनेत्रैकवर्णनेनेतरगुणावयवानामवर्ण्यत्वं मनस्युत्प्रेक्ष्य कुपितायां राधिकायां सत्यां तत्सान्त्वनध्वननार्थं तत्सखीं प्रति श्रीकृष्णो वा तच्छीलविशेषं संवर्णयति—

**गुरुमध्ये हरिणाक्षी मार्तिकशकलैर्विहन्तुकामं माम् ।**
**रदयन्त्रितरसनाग्रं तरलितनयनं निवारयांचक्रे ॥ ४७ ॥**

गुरुमध्य इति । मार्तिकेति । मृत्तिकाया इमानि तानि च तानि शकलानि चेति तथा । तैः । मृल्लोष्टखण्डैरित्यर्थः । रदेति । रदैर्दन्तैर्यन्त्रितं धृतं रसनाग्रं जिह्वाग्रं यस्मिन्कर्मणि यथा भवति तथेत्यर्थः । स्वभावोक्तिरियम् । एवं तरलितेत्यपि । यथाश्रुत एवान्वयः । एवं च लज्जाभये व्यज्येते । तस्मान्मौग्ध्य इयमेवं मर्यादाशीलाभूत्, अधुना तु मध्यावस्थायां ततोऽप्याधिक्येनैव भाव्यम् । तदपहाय विवेकैकमूलकं क्रोधादिकमेवेयं कलयतीति तत्र मद्दैवमेव प्रयोजकमित्याकूतम् । इह स्वकीया परकीया वा स्मर्यमाणा लज्जादिमती प्रकृता तु क्रुद्धा मध्यैव नायिका । कामुकः खिन्नश्च नायकः । विप्रलम्भ एव शृङ्गारः । लुप्तोपमा काव्यलिङ्गं स्वभावोक्तिश्चालंकारः ॥

ततो रसरभसाद्विरहकातरेण श्रीरामेण सीता श्रीकृष्णेन राधिका वा 'यदि त्वं मह्यं नैव प्रसीदसि तर्हि गच्छाम्येवाहम्, तथाप्येकवारं चरममिदमालिङ्गनं देहि' इति वदता बलाद्देवालिङ्गिता सती तादृगाश्लेषादिमाहात्म्येनैव सद्यः प्रससादेति कविर्वर्णयति—

**नयनाञ्चलावमर्शं या न कदाचित्पुरा सेहे ।**
**आलिङ्गितापि तस्थौ सा गन्तुकेन दयितेन ॥ ४८ ॥**

नयनेति । या । नयनेति । नेत्रकोणसूचितरतिपरामर्शमपीत्यर्थः । एतेन मानाद्यतिरेकः सूचितः । पुरा कदाचिदपि न सेहे नैवासहत । किंतु कुपितैवासेत्यर्थः । सा गन्तुकेन जिगमिषुणा दयितेनालिङ्गितापि न तु दृष्टा । साङ्गमङ्गैर्भुजप्रसारणकुचौन्नत्यकरणादिरूपैः साधनैः सहितं यथा भवति तथा । एतेन प्रसादो द्योतितः । तस्थावित्यन्वयः । तस्मादलौकिकं काममाहात्म्यमिति तत्त्वम् । 'आलिङ्गितापि जोषं तस्थौ सा' इति पाठे तु जोषं सुखं यथा स्यात्तथा तस्थावित्यर्थः । अत्र गन्तुकपदं सहेतुकम् । इह मुदिता स्वकीया परकीया वा मध्यैव नायिका नायकश्च । संभोगः शृङ्गारः । परिकरोऽलंकारः ॥

एवं श्रीरामेण सीतायाः श्रीकृष्णेन राधाया वा ज्ञातेऽप्युक्तचेष्टया प्रसादे स्पष्टं मिष्टभाषणादिना तस्यादृष्टत्वात्तद्दार्ढ्यपरीक्षणार्थं सत्यप्रतिज्ञत्वेन तत्कालमेव चुम्बनाद्यकृत्वैवान्यत्र गमने कृते सति संभोगारम्भार्धभङ्गवशादतुलकामाकुलया तयैव तदानयनार्थं प्रेषिता स्वसखी तं प्रति तदवस्थां कथयति—

**मानपराग्वदनापि प्रिया शयानेव दयित करकमले ।**
**उद्वेल्लद्भुजमलसग्रीवाबन्धं कपोलमाधत्ते ॥ ४९ ॥**

मानेति । हे दयित । मत्सखीप्रियेत्यर्थः । प्रिया । तावकीति शेषः । रत्युत्पादनायेदं पदद्वयम् । मानेति । शयानेव । एतेनातिशैथिल्यं सूच्यते । करेति । स्वहस्तपद्म इति यावत् । उद्वेल्लदिति । उद्वेल्लन्नुत्कर्षेण वक्रीभवन्भुजो येन तम् । एतेनोक्तशैथिल्यमेव पोषितम् । अलसेति । अलसस्तत्सूचकाकारशाली ग्रीवाबन्धो(न्धः) कं(कः) स्थितिविशेषो येन तम् । एतादृशम् । स्पष्टमपरम् । तस्मात्त्वयासौ द्रुतमुपगन्तव्येति तात्पर्यम् । अत्र निरुक्तावस्थया चिन्तातिशयो व्यज्ये(ज्यते) । इह विरहिणी स्वकीयादिरेव नायिका । चतुरो नायकः । विप्रलम्भः शृङ्गारः । उपमादिरलंकारः ॥

एवं सखीवचनं श्रुत्वा श्रीरामः सीतां श्रीकृष्णो वा राधामभ्युपगम्य तां स्तौति—

**लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः ।**
**कस्तूरीतिलकमिषादयमलिकेऽलिस्तवोल्लसति ॥ ५० ॥**

लोचनेति । अयि प्रिये, अयं प्रत्यक्षः । तव । अलिके । 'ललाटमलिकम्' इत्यमराल्ललाट इत्यर्थः । कस्तूरीति । मृगमदविशेषकमिषादिति यावत् । अलिर्भ्रमर उल्लसति म-

न्मनसि प्रतिभातीत्यन्वयः । तत्र हेतुः—पूर्वार्धेन । लोचने त्वन्नेत्रे एव फुल्लाम्भोजे विकसितासिताब्जे तयोर्यद्द्वयं तत्रान्दोलितं किं तत्र गन्तव्यमत्र वेति संदेहदोलाधिरूढमेकं मनो यस्येति तथा । एवं चोभयत्राप्याशापाशपारवश्यान्मध्य एवावस्थित इति यावत्। एतेन तात्कालिकप्रसन्नदृष्टित्वं तस्यां ध्वनितम् । तत्र च स्वोपगम एव हेतुरिति द्योत्यते। अत्र प्रसन्नैव स्वकीया परकीया वा मध्या नायिका । अनुकूलो नायकः । संभोगारम्भः शृङ्गारः । कैतवापह्नुत्यादिरलंकारः ॥

अथैवं स्तुतावप्यत्र 'भोः प्रिये, अयि प्रेयसि, हे कान्ते,' इत्यादि संबुद्ध्यभावाद्वाक्यस्य सामान्योक्त्यापत्तेः पुनरपि रोषवशायां सीतायां राधायां वा सत्यां सख्या बलादेव तल्पे निद्रापितायामपि श्रीरामः श्रीकृष्णो वा नवोढानिदर्शनेन तत्सखीं प्रति ब्रूते—

**अधिरजनि प्रियसविधे कथमपि संवेशिता गुरुभिः ।**
**किं भवितेति सशङ्कं पङ्कजनयना परामृशति ॥ ५१ ॥**

अधिरजनीति । हे सखि, काचिन्मुग्धा गुरुभिः श्वश्रूप्रभृतिभिः । प्रौढस्त्रीजनैरित्यर्थः । अधिरजनि । रात्रावित्यर्थः । प्रियेति । तत्कान्तान्तिक इत्यर्थः । कथमपि यथाकथंचित् । अतिबलात्कारेणेत्यर्थः । संवेशिता निद्रापिता । अत एव । उत्तरार्धं सरलमेव । इतः परं किं भविता सुरतस्य जन्मप्रभृति कदाप्यननुभूतत्वात्कथं भविष्यतीति सशङ्कं संशयसहितं यथा स्यात्तथेत्यर्थः । पङ्कजेति । रात्रौ कमलानां मुकुलीभावाद्भीत्यादिना मुकुलितनेत्रा सती परामृशति यथा मनसि विचारयति । तथेयमपीत्यर्थः । एतेनोपहासः सूचितः । तस्मादतीतकैशोर्यायास्त्वद्वयस्याया अस्या इदमनुचितमेवेत्याकूतम् । अत्र कुपिता नायिका परकीयादिरेव । खिन्नो नायकः । विप्रलम्भः शृङ्गारः । काव्यलिङ्गादिरलंकारः ॥

ततस्तस्यां रजन्यां तथैव गतायां सत्यामन्येद्युरपि प्रदोषे काचित्परमप्रियवयस्या सीतां राधां वा प्रतिबोधयति—

**चिन्तामीलितमानसो मनसिजः सख्यो विहीनप्रभाः**
**प्राणेशः प्रणयाकुलः पुनरसावास्तां समस्ता कथा ।**
**एतत्त्वां प्रति वेदयामि मम चेदुक्तिं हितां मन्यसे**
**मुग्धे मा कुरु मानमाननमिदं राकापतिर्जेष्यति ॥ ५२ ॥**

चिन्तेति । योजनं तु यथाश्रुतमेव । कामस्य सचिन्तत्वं त्वन्मानापनोदस्य दुःसाध्यत्वाद्बोध्यम् । इदमेव सख्यादावपि । आस्तामियं वार्ता । बाहुल्यवशादौदास्यं द्योत्यते । तृतीयपादेनापक्षपातित्वं ध्वन्यते । किं तदित्यत्राह—मुग्धे इति चरमचरणेन । राकेति । पूर्णचन्द्रः । माने हि त्वन्मुखे रोषकषायवशात्सकलङ्कोऽप्यसावप्रसन्नमिदं स्वप्रसादतः पराभविष्यत्येवेति भावः । एतेन भूरिकालमयमेतादृशमवसरं लक्षीकृत्य परिभ्रमति, अतोऽसावस्मै त्वया नैव

देय इति तत्सौन्दर्यस्तवो व्यज्यते । एवं मनसिजसखीप्राणेशपदैः स्थूलसूक्ष्मशरीरद्वयाधिष्ठातृणामेतेषां परितोष एव श्रेयस्कर इति द्योत्यते । तस्माद्द्रुतमभिसर्तव्यमेवेत्याकूतम् । अत्र मानवती स्वकीयादिरेव नायिका । प्रतीपविशेषः काव्यलिङ्गं चालंकारः । शेषं तूक्तमेव ॥

एवं सख्योपदिष्टाप्यप्रसन्ना सीता राधा वा श्रीरामेण श्रीकृष्णेन वा विनोद्यते—

**अलंकर्तुं कर्णौ भृशमनुभवन्त्या नवरुजं**
**ससीत्कारं तिर्यग्वलितवदनाया मृगदृशः।**
**कराब्जव्यापारानतिसुकृतसारान्रसयतो**
**जनुः सर्वं श्लाघ्यं जयति ललितोत्तंस भवतः ॥९३॥**

अलंकर्तुमिति । हे ललितोत्तंस । लालित्यं प्रकृतप्रियाकर्णस्थिततत्वादेव बोध्यम् । पृथक्पदं वेद्यम् । एतेन जडोऽपि रत्नावतंसो यत्कर्णस्थितत्वेनैव ललितोऽभूत्तयातिप्रीत्या हृद्यालिङ्गितोऽहं चेतनोऽपि ललिततमो नायकः किं न भविष्यामीत्याकूतं द्योत्यते । भवतस्तव सर्वं न तु यत्किंचित् । तेन तव सकलजन्मसाफल्यं वक्ष्यमाणव्यापारानुभवादेवेति व्यज्यते । ततो मम तु न तथेतीर्ष्यापि सूच्यते । जनुः । 'जनुर्जननजन्मानि' इत्यमराज्जन्मेत्यर्थः । श्लाघ्यं पूज्यं जयति सर्वोत्कर्षेण वर्तत इत्यन्वयः । तत्र हेतुस्त्रिपाद्या । कर्णावलंकर्तुं भूषयितुम् । नवरुजं नवा कर्णवेधादिजन्यत्वेन नूतना चासौ रुक्चेति तथा । तामित्यर्थः । भृशं न तु यत्किंचित् । तेन तज्जन्यदुःखेऽप्यलंकारधारणादौ तरुणीनां प्रायो नैसर्गिक्येवाभिरुचिरिति स्वभावोक्तिर्ध्वन्यते । अनुभवन्त्या न तु शृण्वन्त्याः । स्मरन्त्या वेत्यर्थः । एवं वक्ष्यमाणव्यापारकारणत्वं फलितम् । अत एव ससीत्कारं सीत्कारपूर्वकं यथा भवति तथेति यावत् । तिर्यक् । सव्यतदितरपार्श्वान्यतरभाग इत्यर्थः । वलितेति । वलितं वक्रीकृतं वदनं यया सा तथा तस्याः । एतादृश्या मृगदृशः कुरङ्गाक्ष्याः । अस्मत्प्रेयस्या इति यावत् । करेति । पाणिपद्मस्पर्शादिव्यवहारानित्यर्थः । एतद्रूपान् । अतीति । अतुलपुण्यपरिपाकमुख्यांशानिति यावत् । रसयतः । आस्वादयत इत्यर्थः । एतादृशस्य भवत इति संबन्धः । एवं चैतादृक्तिर्यग्वलितवदनसीत्कारपूर्वकं हि करकमलव्यापाराः सौकुमार्यातिशयेन सुरतरभसासहिष्णुतादशायां मयानुभवितुं योग्या एव भवन्त्यस्यास्तत्कालं मदङ्गमृदुपरामर्शादिना । तत्त्वद्य विपरीतमेव संपन्नं यज्जडेनापि भवता तेऽनुभूयन्ते न तु प्रियतमेनापि मयेति धिङ्ममैव मन्दभाग्यमिति भावः । अत्र मानवती स्वकीयादिरेव नायिका । कुशलो नायकः । विप्रलम्भः शृङ्गारः । काव्यलिङ्गादिरलंकारः ॥

ततोऽपि मानानपगमे पुनस्तत्सख्येव तां साम्नैव प्रार्थयते—

**आयातैव निशा निशापतिकरैः पूर्णं दिशामन्तरं**
**भामिन्यो भवनेषु भूषणगणैरङ्गान्यलंकुर्वते ।**

**मुग्धे मानमपाकरोषि न मनागद्यापि रोषेण ते**
**हा हा बालमृणालतोऽप्यतितरां तन्वी तनुः क्षाम्यति ५४**

आयातैवेति । हे मुग्धे । एतेन सौन्दर्येऽपि मौढ्यं ध्वन्यते । निशा रात्रिरायातैव प्राप्तैव । किं ततः स्वपिष्याम्येवाहमेकाकिन्येवेति चेत्तत्राह—निशापतीति । चन्द्रकिरणैः । दिशाम् । प्राच्यादिहरितामित्यर्थः । अन्तरम् । अवकाशजातमित्यर्थः । पूर्णं व्याप्तम् । ननु किमेतावतेत्यत आह—भामिन्य इति । कोपस्वभावा अपि कामिन्य इत्यर्थः । एतेन संप्रदायः सूचितः। मयापि नैव भूषणानि परित्यक्तानीत्यत आह—उत्तरार्धशेषेण । त्वं त्वद्यापि मनागपीषदपि मानं रूपादिगर्वं नापाकरोषि नैव दूरीकरोषीति संबन्धः । अस्तु नाम ममैवम्, किं तेन तवेत्यत्राह—रोषेणेति । ते तव । बालेति । सूक्ष्मबिसादपीत्यर्थः । अतितरामतुलं तन्वी स्वाभाविककृशापि तनुः । रोषेण कोपेन । हा हेति खेदे । क्षाम्यत्यतिकृशत्वमेतीति योजना । 'ताम्यति' इति पाठे संतप्ता भवतीत्यर्थः । तस्मात्त्वयैवं नैव कार्यमिति तात्पर्यम् । अत्र परिकराङ्कुरोऽलंकारः । शेषं तूक्तमेव ॥

एवमप्यप्रसन्नां सीतां राधां वा प्रति पुनस्तत्सख्येव प्रवसत्पतिकायाः कस्याश्चिदन्यस्या नायिकायाः प्रियसौहार्दाधिक्यध्वनकव्यापारजातं कथयन्ती सती त्वं तु तदधिकवयोवत्यपि मया भूयो विबोधिता सत्यपि नाद्यापि मानमवमानयसीत्यतो वन्ध्यैवासीत्युपालम्भं व्यनक्ति—

**वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने**
**केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजम् ।**
**निःश्वासग्लपिताधरं परिपतद्बाष्पार्द्रवक्षोरुहा**
**बाला लोलविलोचना शिव शिव प्राणेशमालोकते ॥५५॥**

वाच इति । भो सखि, अत्र प्रतिवेशिवेश्मनि । प्रयाणसमये तत्कान्तस्य नगरान्तरं प्रति प्रवासकाल इत्यर्थः । जने मित्त्रादिपरिजने । माङ्गलिकीः । सुमुहूर्तमङ्गलोपयुक्तस्वस्त्यादिशब्दवतीरिति यावत् । एतादृशीर्वाचो वाणीरनल्पं बहुलं जल्पति सुव्यक्तं वदति सति । केलीति । चरमभूमिकागतरत्यागारगवाक्षमध्य इत्यर्थः । विन्यस्तेति । विन्यस्तं कान्तदर्शनं यथा स्यात्तथात्वलक्षणेन विशेषेण न्यस्तं स्थापितं वक्त्राम्बुजं मुखकमलं यथा भवति तथेत्यर्थः । 'विन्यस्य' इति क्वचिल्ल्यबन्तपाठोऽपि । तत्र वक्त्राम्बुजं विन्यस्येति योज्यम् । 'विन्यस्तवक्त्राम्बुजा' इति पाठे तु विन्यस्तं वक्त्राम्बुजं ययेति । अत एव । निःश्वासेति । निःश्वासैर्विरहजन्यदाहोष्णश्वासैर्ग्लपितो ग्लानिं प्रापितः । शुष्कतां नीत इति यावत् । तादृशोऽधरोऽधरोष्ठो यस्मिन्कर्मणि यथा भवति तथेत्यर्थः । परीति । परितः समन्तान्न त्वेकदेशे । तेन तत्प्राचुर्यं कुचकाठिन्यं च सूच्यते । कठिने हि स्थले पतितोऽम्बुबिन्दुस्तत्कालमेवोड्डीय सहस्रधा परितः प्रसरतीति प्रसिद्धमेव । तथा पतन्ति च तानि बा-

ष्पाणि चेति तथा । निपतदश्रूदकानीत्यर्थः । एतेन प्रियवियोगशोकातिशयो द्योत्यते । तैरार्द्रौ क्लिन्नौ वक्षोरुहौ स्तनौ यस्याः सा तथा । न तूद्दरम् । तेन स्तनयोरतुलौन्नत्यात्तस्यास्तारुण्याधिक्यं ध्वन्यते । एतादृशी बाला 'कैशोरमा पञ्चदशम्' इति वचनाद्वादशाब्दाधिकवयोवती काचिन्नायिकेत्यर्थः । एतेनास्यास्तादृक्प्रागल्भ्यायोग्यत्वे तद्दर्शनं प्रेमैकनिबन्धनमिति ध्वनितम् । लोलेति । चपललोचना सतीत्यर्थः । एतेन तच्चेतसोऽतिस्मरशरसंत्रस्तत्वं व्यज्यते । एतादृशी सती प्राणेशं न तु पतिम् । तेन तद्विरहे कथं मत्प्राणाः स्थास्यन्तीति चिन्ताकुलत्वं सूच्यते । आलोकते । पश्यतीत्यर्थः । यावत्तद्रथधूल्यादिदर्शनं तत्रैव तटस्थीभवतीति भावः । त्वं तु तदधिकवयस्काप्येतादृशी कोपनैवेत्याश्चर्यमित्यद्यापि तर्हि प्रसादः कार्य एवेति तात्पर्यम् । इह विरहिणी स्वकीयादिरेव नायिका नायकश्च । विप्रलम्भः शृङ्गारः । लुप्तोपमादिरलंकारः ॥

एवं सोपालम्भाकूतवचसा किंचित्तत्कोपमालक्ष्य सैव पुनस्तां स्तुवन्ती सखीप्रसादव्यञ्जकं तत्स्मितं याचते—

**दारिद्र्यं भजते कलानिधिरयं राकाधुना म्लायति**
**स्वैरं कैरवकाननेषु परितो मालिन्यमुन्मीलति ।**
**द्योतन्ते हरिदन्तराणि सुहृदां वृन्दं समानन्दति**
**त्वं चेदञ्चसि काञ्चनाङ्गि वदनाम्भोजे विकासश्रियम् ॥ ५६ ॥**

दारिद्र्यमिति । हे काञ्चनाङ्गि, काञ्चनवदङ्गं यस्यास्तत्संबुद्धौ । अयि सुवर्णवर्णशरीरे मत्सखि सीते राधिके वेत्यर्थः । एतेन परमगौरत्वलावण्यत्वे तत्काये द्योत्येते । गूढाभिसंधिनातः काठिन्यमपि । त्वम् । वदनेति । मुखकमल इत्यर्थः । विकासेति । विकासपदविवक्षितस्मेरलक्ष्मीमिति यावत् । एतेनास्यां पद्मिनीत्वं व्यज्यते । चेद्यदि । एतेन तद्दौर्लभ्यं व्यज्यते । अञ्चसि । स्वीकरोषीत्यर्थः । तर्ह्ययं प्रत्यक्षः । एतेनोद्दीपनसामग्री सूचिता । कलेति । एवं चैतच्चतुर्गुणितकलानन्दजनकत्वमुक्तभावत्कमुख एवेति द्योत्यते । अधुनेदानीमेव न तु कालान्तरे । तेन तादृशे तन्मुखे लोकोत्तरसौषमशालित्वं सूच्यते । दारिद्र्यं श्रीशून्यत्वम् । भजते । प्राप्नोतीत्यर्थः । त्वत्प्रसादादित्योदयेन त्वन्मुखकमले विकासश्रीभाजि कलानिधेरपीन्दोर्निःश्रीकत्वं युक्तमेवेत्याकूतम् । एवं च तृतीयपादार्थोऽपि संगतः । तस्य यदि चन्द्रादौ दारिद्र्यादि तदा रात्रौ मित्रालोकराहित्यात्तमःप्राचुर्यप्रयोजकं तर्हि किं मामकं स्मितमिति शङ्कोपशामकत्वात् । तथा हि । यद्यपि चन्द्रादिषु दारिद्र्यादिसत्वेऽपि त्वन्मुखकमलान्तर्गतकुन्दकलिकायमानकतिचिद्द्विजराजराजीयालौकिकचन्द्राङ्कुरैर्दिङ्मण्डलमण्डनमखण्डितमेवेति । एवं राकापूर्णनिशाकरपूर्णमास्यधुनेति सर्वत्र योज्यम् । म्लायति । ग्लानिं प्राप्नोतीति यावत् । नहि धर्मधूनने धर्मिधौरेयता नाम । अतएव स्वैरमित्यादिद्वितीयः पादः । स्वैरमुन्मीलतीति संबन्धः । निरर्गलं प्रसरतीत्यर्थः । तृतीयपादस्तु विवृत्त-

प्राय एव । सुहृदां मादृक्सखीजनप्रभृतीनां सरसचेतसामित्यर्थः । अत्र त्रिपाद्यां सर्वत्र वर्तमानार्थकाख्यातैश्चतुर्थचरणग्रथितकारणैककालिकत्वमुक्तकार्याणां ध्वन्यते । तस्मादुक्तानेकप्रयोजनं सप्रसादमन्दहसनं भवत्या विधेयमेवेत्याशयः । इह मानवती प्राक्तनैव नायिका नायकश्च रसोऽपि । लुप्तोपमा प्रतीपविशेषोऽक्रमातिशयोक्तिश्चालंकारः । तदुक्तम्—'अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः । आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते ॥' इति । वदनेति यतिभङ्गस्त्वनवधानहेतुभूताद्व्यग्रयाः सख्यास्तत्प्रसादनलौल्यादेवेति दिक् ॥

एवं प्रार्थनेऽप्यपरित्यक्तमानायां सीतायां राधायां वा सत्यां प्रकृतैव तत्प्रियसखी निकटवर्तितत्सख्यन्तरं प्रतिवक्ष्यमाणलक्षणायामस्यां वसन्तलक्ष्म्यां सत्यां कथमियं मत्सखी मानैकपरवश्या प्राणधारणं करिष्यतीति स्वचिन्तासूचनतोऽनया झटिति मानापनोदनपूर्वकं प्रत्युपगन्तव्यमेवेति व्यनक्ति—

**पाटीरद्रुभुजङ्गपुंगवमुखायाता इवातापिनो**
**वाता वान्ति दहन्ति लोचनममी ताम्रा रसालद्रुमाः ।**
**एते हन्त किरन्ति कूजितमयं हालाहलं कोकिला**
**बाला बालमृणालकोमलतनुः प्राणान्कथं रक्षतु ॥ ९७ ॥**

पाटीरेति । पटीरो मलयाचलः । तस्यायं स चासौ । 'द्रुद्रुमागमाः' इत्यमराद्द्रुर्वृक्षः । अर्थाच्चन्दनतरुः । बहुवचनं वा । तदीया ये भुजंगमपुंगवाः । 'पुंगवर्षभकुंजराः' इति श्रेष्ठवाचकशब्देष्वमरे पुंगवपदोक्तेः सर्पश्रेष्ठास्तेषां मुखानि तेभ्य आयाता इव समागताः किमित्यर्थः । अत एवातापिनः । समन्ताद्विरहिणीतापजनका इत्यर्थः । एतादृशो वाताः पवना वान्त्युक्तरीत्या शीतादिगुणत्रयवत्त्वेन प्रसरन्तीति यावत् । किंच । अमी प्रत्यक्षास्ताम्रा नूत्नसंजातपल्लवत्वेनारक्तवर्णा इत्यर्थः । ईदृशः । रसालेति । आम्रवृक्षा इत्यर्थः । लोचनं नेत्रम् । जात्यभिप्राये(य)मेकवचनम् । विरहिणीनामित्यार्थिकम् । विवेकज्ञानं वा । दहन्ति । एतेन विवेकः कार्य इत्याकाङ्क्षापि प्रतिक्षिप्ता । अपि च । हन्तेति खेदे । एते प्रत्यक्षा न तु परोक्षाः । तेन तद्ध्वनौ भ्रमत्वं व्युदस्तम् । कोकिलाः कूजितमयं रुतत्वेन विकृतम् । एतेन विकृतस्य तिक्तद्रव्यादेरतिरिक्तत्ववदनुपमतापकत्वं व्यक्तम् । हालाहलम् । 'पुंसि क्लीबे च काकोलकालकूटहलाहलाः' इत्यमरात्स्वार्थे तद्धितः । कालकूटमित्यर्थः । तेनालौकिकदाहकत्वं द्योत्यते । किरन्ति । वर्षन्तीत्यर्थः । तेनानल्पत्वं सूचितम् । भवत्वेवम्, किमेतावता प्रकृत इत्यत आह—बालेति चरमचरणेन । एवं सति हे सखि, इयं मद्वयस्या बाला द्वादशवर्षोर्ध्वषोडशार्वाग्वयस्का । सीता राधा वेति यावत् । न तु प्रौढा । तेन धैर्यवैधुर्यं ध्वन्यते । तत्रापि दृढा चेत्सहेतैव कदाचित्परंतु परमसौकुमार्यान्न तच्छङ्कापीति व्यनक्ति—बालेति विशेषणतः । तत्रापि बालं न तु पक्वं तदपि मृणालं बिसं न तु कुसुमं तद्वत्कोमला सुकुमारतरा तनुर्यस्याः सा तथेत्यर्थः । एतादृशी । अत एव नायकसंयोगमन्तरा कथं प्राणान्रक्षतु ।

न कथमपीत्यार्थिकम् । तस्मादनयाधुनाभिसर्तव्यमेवेति तात्पर्यम् । इह नायिकादिकं स-र्वमनपूर्वमेव । उक्तास्पदा हेतूत्प्रेक्षा परिणामः काव्यलिङ्गं लुप्तोपमादिश्चालंकारः ॥

एवं स्वरहःसखीवाक्येन सीता राधा वा यावत्स्वमनसि श्रीरामाद्यभिस[र]णसंकल्पा-याकलयति तावदेव तदुद्दीपनसामग्रीभूतममृतद्युतिबिम्बमुदयाचलशृङ्गश्रेणिपरिचुम्बि संब-भूवेति कविर्वर्णयति—

**आयातैव निशा मनो मृगदृशामुन्निद्रमातन्वती**
**मानो मे कथमेष संप्रति निरातङ्कं हृदि स्थास्यति ।**
**ऊहापोहमिमं सरोजनयना यावद्विधत्तेतरां**
**तावत्कामनृपातपत्रसुषमं बिम्बं बभासे विधोः ॥ ५८ ॥**

आयातैवेति । यत इत्यध्याहारः । मृगेति । हरिणाक्षीणामित्यर्थः । एतेन तारुण्यं ध्व-न्यते । तत्रैव स्त्रीणां हरिणादिवद्रागादिना लोचनचापल्यादिसत्त्वात् । एवं च साधारणत-रुणीनामपीयं रात्रिः कामोद्दीपिका यदा, तदा लोकोत्तरतरुण्या मे सा कीदृगुद्दीपनातिशयं करिष्यतीति न जान इति चिन्तातिशयः सूचितः । मनोऽन्तःकरणमपि । न तु चन्द्रादि-दिदृक्षया केवलं चक्षुरेवेत्यर्थः । एतेन तदौत्कण्ठ्ये सति तदधीनसकलेन्द्रियवैकल्यं व्य-ज्यते । उन्निद्रं जागरूकम् । सावधानमिति यावत् । आतन्वती विस्तारयन्तीति तत्त्वम् । त-त्रापि आ समन्तादित्यर्थः । एवं चास्यामत्यौत्सुक्यजनकत्वं द्योत्यते । एतादृशी निशा रात्रिः । आयातैव प्राप्तैवेत्यर्थः । न त्वायास्यति क्षणान्तरे । एतेन संदीप्तभवनकूपखनन-न्यायेनोपायवैधुर्यं ध्वन्यते । अतो मे मम हृदि न तु बहिः । एष साक्षिप्रत्यक्षो मानो 'रूपादिना निजोत्कर्षाद्गर्वोऽन्यस्यावहेलनम् । मत्सौन्दर्यानुसंधानान्न ते गोवर्धन व्यथा ॥' इति मदीयसाहित्यसारनिरुक्तलक्षणादेर्गर्वापरपर्यायस्य मनस्योद्दामत्वप्रयोजकधन्यत्वाधा-यकवृत्तिविशेषस्यैव विवक्षितत्वाद्युक्तमेव तस्योक्तप्रत्यक्षत्वम् । संप्रतीदानीम् । तेन काला-न्तरे तत्संभवेऽपि प्रकृतकालिकत्वेन पुनस्तदनागतेस्तद्विषयकचिन्तावश्यकत्वं व्यज्यते । निरातङ्कं 'रुक्तापशङ्कास्वातङ्कः' इति कोशान्निःशङ्कं यथा स्यात्तथेत्यर्थः । एतेन संस्कारा-त्मना तत्स्थितिसंभवेऽपि व्यक्तरूपेण तदसंभव एवेति द्योत्यते । कथं स्थास्यति कथमपि नैव तत्स्थितिसंभावनाशापीत्याशयः । इमं निरुक्तप्रकारकम् । ऊहेति । तर्कवितर्कम् । सरो-जेति । पद्ममुखीत्यर्थः । तेन तदानीं सायंकालत्वेन कमलानां मुकुलीभवनौन्मुख्यादुक्त-चिन्तापारवश्येन तस्यां म्लानास्यत्वं सूचितम् । यावद्यत्कालावच्छेदेन । विधत्तेतरां 'वि-भुर्विजयतेतराम्' इत्यादिवदत्यन्तं करोतीत्यर्थः । तावत्तत्कालावच्छेदेनैव । कामेति । स्मरनरपतिसितातपत्रशोभासंभारमित्यर्थः । एतादृशं विधोश्चन्द्रस्य बिम्बं बभासे प्रकटी-बभूवेत्यन्वयः । अत्रातपत्रेत्यनेन पूर्णत्वं व्यज्यते । इह मानवती सचिन्ता स्वकीया पर-कीया वा मध्यैव नायिका । विप्रलम्भः शृङ्गारः । निरेति यतिभङ्गोऽपि वक्त्र्या रसावेशा-न्नैव दोषाय । 'इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् । दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥'

इत्युक्तलक्षणो विषादनाख्यः काव्यलिङ्गादिश्चालंकारः। 'सुषमा परमा शोभा' इत्यमरः॥

इत्थं संजाते चन्द्रोदये धैर्यं धर्तुमशक्नुवाना सीता राधा वा श्रीरामं श्रीकृष्णं वाभिसृत्य यथेच्छं निशि नानाविधविलासैः क्रीडित्वा संजातेऽपि प्रभाते प्राक्तनभूरिकालिकविरहाकुलत्वेन तत्राप्यतृप्यमाणा स्वस्याः पद्मिनीत्वेन दिवा रतिप्रियत्वात्तस्य तत्कालज्ञानप्रागभावपरिपालनाय तल्लोचनसंछादनलीलां संपादयन्त्यपि तेन परमचतुरेण कोमलपरिमलशालिमन्दानिलादिना विज्ञाते सति प्रातःकालेऽसौ विफलितप्रयत्नैव संपन्नेति कविर्व्यनक्ति—

**प्रभातसमयप्रभां प्रणयिनी ह्नुवाना रसा-**
**दमुष्य निजपाणिना दृशममीलयल्लीलया।**
**अयं तु खलु पद्मिनीपरिमलालिपाटच्चरै-**
**रवेरुदयमध्यगादधिकचारुतैर्मारुतैः॥ ५९॥**

प्रभातेति। प्रणयिनी प्रेयसी। सीता राधिका वेत्यर्थः। प्रभातेति। प्रातःकालीनसूर्यदीधितिमित्यर्थः। रसात्। 'शृङ्गारादौ रसे वीर्ये गुणे रागे द्रवे रसः' इति कोशात्सुरतानुरागाद्धेतोरिति यावत्। ह्नुवानापलपमाना सतीत्यर्थः। अमुष्य प्रकृतस्य श्रीरामस्य श्रीकृष्णस्य वा दृशं दृष्टिं लीलया। शृङ्गारचेष्टाविशेषेणेत्यर्थः। निजेति। स्वकरकमलेनेति यावत्। अमीलयदाच्छादयामासेति संबन्धः। अयं तु प्रकृतनायकस्तु। पद्मिनीति। पद्मिनीनां कमलिनीनां ये परिमलाः सूर्योदयवशसंपन्नविकासलेशजन्यसुगन्धास्तेषां या आलयः पङ्क्तयः। एतेन वक्ष्यमाणमारुतेषु सौगन्ध्याधिक्यं ध्वन्यते। तासां ये पाटच्चराश्चोरा इवापहर्तारस्तैरित्यर्थः। अत एव—अधिकेति। अधिका लोकोत्तरा चारुता शीतमन्दसुगन्धित्वरूपा रमणीयता येषां तैरित्यर्थः। एतादृशैर्मारुतैः पवनै रवेः सूर्यस्योदयमध्यगाद्बुबुधे खल्विति योजना। एवं च तद्यत्नवैफल्यमेव बभूवेति भावः। 'प्रणयिनि' इति सप्तम्यन्तपाठे पञ्चम्यन्तरसपदेन संबन्धे कान्तविषयकानुरागवशादित्यर्थसंभवेऽपि कर्त्र्या नायिकाया अध्याहारापत्तिः। एवं 'प्रणयनिह्नुवाना' इति समस्तपाठेऽपि प्रणयेन प्रेम्णा निह्नुवानेति व्युत्पत्ति संभवेऽपि रसादित्यत्र पौनरुक्त्यापहत्यै संभोगशृङ्गाररसाद्धेतोरित्यर्थकरणेऽपि च तदापत्तिर्दुर्वारैवेति बोध्यम्। एवं चोक्तपाठ एव श्रेयान्। तथा च प्रणयिनीत्वादेवोक्तदृङ्मीलने प्रवृत्तिरिति तत्त्वम्। यदा त्वलयो भृङ्गा एव पाटच्चरा इति व्याख्यायते तदा माकारीणि सूर्योदयप्रभाजनकानि रुतानि शब्दितानि येषां तैरिति तद्विशेषणमेव ज्ञेयम्। अन्यथा समुच्चायकश्चकारादिरध्याहार्यः स्यात्। अत एव। अधिकेति। एवं पद्मिनीनां स्त्रीविशेषाणां परिमलो येषु ते च ते। आल्या सखीद्वारा पाटच्चरा इवेति व्युत्पत्त्या जारपरत्वमपि। तेन समासोक्तिरलंकारः। लीलावती स्वकीयादिरेव नायिका। पूर्वार्धे संभोगः, उत्तरार्धे विप्रलम्भश्च शृङ्गारः। कुशलो धार्मिकश्च नायकः। श्लेषादिरप्यलंकारः॥

अथ प्रातरुत्थानादिविहितयथाविध्याह्निकव्यापारं श्रीरामं श्रीकृष्णं प्रति वा तादृश्यैव

सीतया राधया वा रहस्यभिसृत्य तृतीययामे किंचित्संकेताद्युक्ते सति तद्दर्शिना के[न]चिद्रहःसुहृदा किमनयोक्तमिति प्रणयपृष्टोऽसौ तं प्रत्याह विदूरादित्यादिद्वाभ्याम्—

**विदूरादाश्चर्यस्तिमितमथ किंचित्परिचया-**
**दुदञ्चच्चाश्चल्यं तदनु परितः स्फारितरुचि ।**
**गुरूणां संघाते सपदि मयि याते समजनि**
**त्रपाघूर्णत्तारं नयनमिह सारङ्गजदृशः ॥ ६० ॥**

हे सखे, विदूराद्विशेषेण दूरतो मद्दर्शने जाते। आश्चर्येति। आश्चर्येण पुरुषाकारेन्द्रनीलनिचयमरीचिमण्डलविलोकनेनाङ्कुतेन स्तिमितं स्तब्धम् । अथानन्तरम्। किंचित्परिचयान्निरुक्ताश्चर्यजन्यलोभवशात्। पुरोगमनजनितेषत्संनिकर्षादित्यर्थः। उदञ्चदिति। उदञ्चदतिपूजितं भवच्चाञ्चल्यं चापल्यं यस्य तत्तथा। तदनु निरुक्तासक्तिसमुद्रेकानन्तरं परितः समन्ततः सर्वसौन्दर्यदर्शनार्थम्। स्फारितेति। स्फारिता प्रसारिता रुचिस्तत्प्रतिबिम्बग्रहात्सार्वांशिकनीलकान्तिर्येन तत्। एतेन क्रमान्नायिकादृष्टावपि स्तम्भवेपथुवैवर्ण्यानि ध्वन्यन्ते। अथ सपदि तत्कालं किंचित्कार्यवशाद्गुरूणां स्वपूज्यानां संघाते समूहे। तन्मध्य इत्यर्थः। मयि याते। गते सतीत्यर्थः। इहास्मिन्काले। त्रपेति। उक्तगुरुनिकरमध्यवर्तित्वादेव या त्रपा ह्रीस्तया घूर्णन्ती चलन्ती तारा कनीनिका यस्य तत्तथा। एतादृशम् । तत्रापि। सारङ्गेति। सारङ्गो हरिणस्तस्माज्जायत इति तथा। कृष्णसारकिशोर इत्यर्थः। तद्वद्दृग्दृष्टिर्यस्याः सा तथा। तस्याः स्वभार(व)त एव कुरङ्गकुमाराक्ष्या इत्यर्थः। नयनं नेत्रम्। जात्येकवचनम्। यद्वा गुर्वित्याद्युक्तहेतोरेककटाक्षाभिप्रायकमेव। समजनीति योजना ॥

किमेवं तर्हि संभोगभङ्ग एव संपन्नः। नेत्याह—

**कपोलावुन्मीलत्पुलकनिकुरम्बौ मयि मना-**
**क्स्पृशत्यन्तःस्मेरस्तबकितमुखाम्भोरुहरुचः ।**
**कथंकारं शक्याः परिगदितुमिन्दीवरदृशो**
**दलद्द्राक्षानिर्यद्रसभरसपक्षा भणितयः ॥ ६१ ॥**

कपोलाविति। ततो झटित्येवान्तःपुरं गत्वा मयि। उन्मीलदिति। मद्दर्शनादेवाविर्भवद्रोमाञ्चनिचयौ। एतादृशौ कपोलौ गल्लौ । स्पृशति चुम्बनार्थं करेण परामृशति सतीत्यर्थः। अत एव। अन्तरिति। अन्तःस्मेरेण गूढस्मितेन स्तबकिता मालतीगुच्छतां गता मुखाम्भोरुहे रुग्यस्या इत्यर्थः। अत एव। इन्दीवरेति। नीलोत्पलविलोचनाया इत्यर्थः। न तु पद्माक्ष्याः । एतेन नायकेऽपि कान्तिसौन्दर्यादिलोकोत्तरगुणगणोदयो द्योतितः। एतादृश्याः पूर्वोक्तनायिकायाः। दलदिति। दलन्त्यो रसपरिपाकवशात्स्वयमेव स्फुटन्त्यः। न तु यत्नपाचिताः। एतेन माधुर्याधिक्यं ध्वन्यते। तत्रापि द्राक्षा मृद्वीकाः। न तु जम्बूफलानि। तासां निर्यन्निःसरन्यो रसभरो द्रवनिवहस्तेन सपक्षाः। निश्चितसाध्यवत्वेन तत्सा-

धर्म्यशालिन्य इत्यर्थः । एतेन तदोष्ठयोर्नैसर्गिकप्रवालायमानत्वेन परमारुण्यपि स्वाभाविकस्मितपूर्वाभिभाषित्वेन दशनचन्द्रिकाङ्कुराञ्चितत्वेन पाटलताया दलद्राक्षोपमेयत्वं तद्वचःसु च मृदुमधुरतरत्वादिना तद्रसभरोपमेयत्वं च सूचितम्। एतादृश्यो भणितयः। संकेतसूचनादिवाग्व्यापारसरण्य इत्यर्थः । परिगदितुं कथयितुं कथंकारं कथं वा शक्याः । न कथमपि शक्यन्त इत्यन्वयः । तस्मान्निरुक्तरीतिकतद्भाषणमनन्तगुणगणैर्वाण्यगोचरमेवेति भावः। अत्र प्रमुदितौ नायिकानायकौ। संभोग एव शृङ्गारः। लुप्तोपमादिरलंकारः ॥

ततः सायं पूर्णचन्द्रोदयं निरीक्ष्य तदपेक्षयापि निकटस्थायाः सीताया राधाया वा वदनस्य श्रीरामः श्रीकृष्णो वा शोभासंभारं व्यनक्ति—

**राजानं जनयांबभूव सहसा जैवातृक त्वां तु यः**
**सोऽयं कुण्ठितसर्वशक्तिनिकरो जातो जरातो विधिः।**
**संप्रत्युन्मदखञ्जरीटनयनावक्त्राय नित्यश्रिये**
**दाता राज्यमखण्डमस्य जगतो धाता नवो मन्मथः ॥ ६२ ॥**

राजानमिति। हे जैवातृक। 'अब्जो जैवातृकः सोमः' इत्यमराद्धे चन्द्रेत्यर्थः। तेन 'जैवातृकः स्यादायुष्मान्' इत्यपि तदुक्तेः श्लेषेणान्यस्य राज्यावाप्तौ स मां मारयिष्यतीति त्वया नैव भेतव्यम्, किंतु तद्राज्यस्य प्रतिक्षणोत्कर्षैकदर्शनतः क्षीणत्वकलङ्कितत्वादिभिरेव केवलं जीवितव्यमिति द्योत्यते । त्वां तु यो विधिर्ब्रह्मा । एतेन विदधातीति विधिरिति व्युत्पत्तिवशात्केवलक्रियैककोविदस्य तस्य विचारविधुरत्वं ध्वन्यते । अतएव सहसा राजानं जनयांबभूव । अविचारेणैव रचयामासेत्यर्थः। सोऽयं सर्वज्ञत्वेन प्रत्यक्षः । एतेनाश्रद्धेयवचनस्त्वं(त्वं) परास्तम् । जरातो द्विपरार्धायुषस्तस्य चरमपरार्धारम्भाद्वार्धक्येणेत्यर्थः । कुण्ठितेति । अत्र सर्वपदेन सार्वांशिकतदाश्रयाशाव्युदासः सूच्यते । एतादृशो जात इत्यन्वयः । ननु भवत्वेवम् । किं तावता । नहि दातुर्दैन्ये दत्तद्रव्यदलनं दृश्यत इत्यत आह—संप्रतीत्याद्युत्तरार्धेन । संप्रति मन्मथः । एवं च क्लीबेतरावच्छेदेन सामान्यतः सर्वमनो मथयितुस्तस्य त्वद्राज्योत्सादनादिना त्वन्मनोव्यथकत्वे कैव शङ्केति सूचितम् । तेन पुंराज्यमपहृत्य क्लीबाय तद्दानानौचित्यं परास्तम् । यो न यत्पीड्यः स तत्प्रेमयोग्य इति व्याप्तेरन्वयादिना सिद्धत्वात्तद्भिन्नस्यैव तत्पीड्यत्वाच्च । एवं संप्रतिपदेन तात्कालिकं निरुक्तनायिकायास्तन्निकटावस्थानं व्यज्यते । उन्मदेति। उन्मदौ सुरतलालसौ यौ खञ्जरीटौ। 'खञ्जरीटस्तु खञ्जनः' इत्यमरात्खञ्जनदम्पतीत्यर्थः । ताविव नयने नेत्रे यस्याः । एतेन तद्वक्त्रस्य पद्मत्वं ध्वन्यते । तेन 'एको हि खञ्जनवरो नलिनीदलस्थो दृष्टः करोति चतुरङ्गबलाधिपत्यम्' इत्यादिकालिदासीयशृङ्गारतिलकोक्तेरहो यद्दर्शनमात्रेणान्येषां राज्यावाप्तिस्तस्य तन्निरतिशयाखण्डतायोग्यताया[ः] कैमुत्यसिद्धिरिति ध्वनितम्। वक्त्राय। मुखायेत्यर्थः। अस्य जगतोऽखण्डमविनाशि । एतेन प्रत्यास्याशोपशमः सूचितः । राज्यं दाता दास्यतीति संबन्धः । एवं तर्हि प्राक्तस्य दारिद्र्यादनधिकारितैवोक्तदाने नह्यकिंचनो विप्रो गजदान-

पात्रं दातुस्तत्कर्तृकतद्विक्रयपापप्रयोजकत्वापत्तेः । इत्यतो विशिनष्टि । नित्येति । ननु जगद्धात्रा विधात्रा मह्यमेव राज्यं दत्तं तत्कथमनङ्गोऽप्यसावपहृत्यान्यस्मै दास्यतीत्यतस्तं विशिनष्टि । अस्य जगतो नवः । धातेति । मैथुन्यां सृष्टौ मदनाधिनैवोत्पत्तिरिति प्रसिद्धमेव । नन्वेवमपि 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुत्या प्राच्यधातृरीतिरेवानेनापि परिपाल्येति यदि विभाव्यते तदा । नित्येति तादर्थ्ये चतुर्थी । एवं च तुभ्यं तेन राज्ये दत्तेऽपि क्षयादिना ते नित्यश्रीर्नैवास्तेति । प्रकृते तु न तथात्वमिति । अधिकारस्तून्मदेत्येतेनैव । अत्र प्रमुदितो(तौ) नायिकानायकौ । संभोगविशेषः शृङ्गारः । हेतुप्रतीपलुप्तोपमापरिकरादयोऽलंकाराः ॥

अथैवं भगवता श्रीकृष्णेन स्तुतेति परमगर्विता राधिका केनचिच्छद्मना प्रणयकोपं संपाद्य तूष्णींभूता सती नायकेरिततद्रहःसख्या श्रीकृष्णस्य सौन्दर्यदर्शनेन यदा कुलस्त्रीणामपि कामव्याकुलीभावः संपन्नस्तदानुभूततद्रतिसुखसंपत्त्या भवत्यास्तावत्कैव कथा क्षणान्तरे तदभिसरणेऽतः सद्यो मह्यमेव यशः किमिति न देयमिति बोध्यते आविर्भूतेत्यादि द्वाभ्याम्—

**आविर्भूता यदवधि मधुस्पन्दनी नन्दसूनोः**
**कान्तिः काचिन्निखिलनयनाकर्षणे कार्मणज्ञा ।**
**श्वासो दीर्घस्तदवधिमुखे पाण्डिमा गण्डमूले**
**शून्या वृत्तिः कुलमृगदृशां चेतसि प्रादुरासीत् ॥ ६३ ॥**

हे राधिके, यदवधि यदारभ्य । नन्देति । श्रीकृष्णस्येत्यर्थः । मध्विति । मधुवन्मद्यवत्स्पन्दयति व्यामोहनेन धैर्याच्चेतश्चालयतीति तथा । स्वदर्शनमात्रेणैवोन्मादयित्रीत्यर्थः । एतेन दुर्निरसत्वं सूचितम् । तत्र हेतुः—निखिलेति । निखिलानां सकलजीवानाम् । एवं च यदा पुरुषनपुंसकादिसाधारण्येन यावज्जीवानामपि नेत्राकर्षणे कुशला भगवतः कान्तिस्तदा त्वामसावाकर्षयिष्यतीति किमु वक्तव्यमिति द्योत्यते । यानि नयनानि नेत्राणि तेषां यदाकर्षणं वशीकरणं तत्र यत्कार्मणं कर्मणाथर्वणप्रसिद्धवशीकरणक्रियाविशेषेण कृतं कार्मणम् । निरुक्तशक्तिविशेषशाल्यदृष्टमित्यर्थः । तत्संपादयितुं जानातीति तथा । एतादृशी । अत एव काचिद्वागगोचरा कान्तिर्लावण्यलक्षणा यौवनद्युतिरिति यावत् । आविर्भूता प्रकटीभूतेत्यर्थः । तदवधि । तदारभ्यैवेति यावत् । कुलेति । कुलस्य । सत्कुलस्येत्यर्थः । यथास्मदादीनां हस्तद्वयादिमत्त्वेऽपि न हस्तिपदशक्यत्वं रूढं गजस्य तु तदभावेऽप्येकस्यैव शुण्डादण्डरूपस्य प्रशस्ततरस्य तस्य सत्त्वेन तत्सर्वसंमतमेव तद्वत्सामान्यतः स्त्रीत्वावच्छिन्नानां जन्यतया कुलैकसंबन्धित्वेऽपि पातिव्रत्याद्यनुमितप्राशस्त्यशालिकुलजन्यस्त्रीष्वेव कुलकामिन्यादिपदवाच्यत्वमिति प्रकृते सदादिपदाभावेऽपि तदार्थिकत्वं बोध्यम् । न तु केवलमृगाक्षीणाम् । तेन यत्र सतीशिरोमालतीभूतानामपीदृश्येवावस्था तत्र परकीयाया भवत्याः कैव कथेति व्यज्यते । मृगपदेनातिभीतिस्वाभाव्यात्स्मरशरातुरत्वातिशयः सूचितः । साध्य(ध्व)भिधमुग्धानामित्यर्थः । मुखे वदने दीर्घो नियतपरिमाणाधिकगामी । श्वासो निः-

श्वासः । यद्यपि श्वासस्य नासिकैकायतनत्वस्वाभाव्येन मुखाधिकरणकत्ववर्णनमनुचितमिव भाति तथापि भगवत्सौन्दर्याद्यभ्युदयदर्शनजन्यानुरागपातिव्रत्यपरिपालनोभयभयजन्यवैकल्योत्कर्षध्वननार्थं तदुचितमेवेति तत्त्वम् । अत एव । दीर्घ इति । तथा गण्डमूले कपोलतले । पाण्डिमा । विरहशुभ्रिमेत्यर्थः । न केवलं बाह्यचिह्नमेवैवं किंत्वान्तरमपि तत्तादृशमिति व्यनक्ति—शून्येति । किं पातिव्रत्यं हेयमुत भगवद्रतिलालस्यमिति निर्णयाभावजन्यकषायाभिधसंकल्पहीनेति यावत् । एतादृशी वृत्तिर्वर्तनं चेतसि प्रादुरासीत्प्रकटीबभूवेति सरलमेव । न च कुलमृगदृक्पदवाच्यपतिव्रतानां परपुरुषीयलोकोत्तरलावण्यवीक्षणमेवादौ 'पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः' इति मूलकाराद्युक्तेः क्व पुनस्तदनुरागः, क्वतरां तज्जन्योक्तनिर्णयाभावः, क्वतमां निरुक्ततत्कार्याणीति वाच्यम् । कृष्णस्य पूर्णब्रह्मत्वेनात्मत्वात्तत्र च निरुपचरितप्रीतिविषयत्वस्य नैसर्गिकसार्वानुभविकत्वाच्च । तेन मायिकाविष्कारितोक्तलीलाविग्रहवति तु तस्य कैमुत्यसिद्धत्वात् । इह संबोध्या मध्या मानवती परकीया च, तथा वर्ण्याः परकीया विरहिण्यो मुग्धाद्याश्च नायिकाः । सर्वोत्तमो नायकः । विप्रलम्भः शृङ्गारः । चपलादि(ति)शयोक्त्यादयोऽलंकाराः । मन्दाक्रान्ता वृत्तम् ॥

**प्रसङ्गे गोपानां यदुषु बहुमानं यदुपते-**
**रुपाकर्ण्य स्विद्यत्पुलकितकपोला कुलवधूः ।**
**विषज्वालाजालं झटिति वमतः पन्नगपतेः**
**फणायां साश्चर्यं कथयतितरां ताण्डवविधिम् ॥ ६४ ॥**

प्रसङ्ग इति । हे राधे । कुलेति । काचित्साध्वी । गोपानां बल्लवानाम् । नन्दादीनामपीति यावत् । प्रसङ्गे कस्मिंश्चिदिन्द्रयागादिकार्यारम्भप्रसक्तावित्यर्थः । गुरुषु । निर्धारणसप्तमीयम् । सकलविद्यावृद्धेषु मध्य इत्यर्थः । यद्वा स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग इत्युक्तलक्षणरीत्या स्मृतिविषयीभूते गुरुविषयकानुपेक्षणीये कः सर्वगुणैर्वरिष्ठ इति विचारे प्राप्ते सतीति यावत्। यदुपतेः श्रीकृष्णस्य बहुमानमिन्द्रयागं युक्तिभिः पराकृत्य गोवर्धनैकयागप्रतिपादकयुक्तिवैभवपारवश्यप्रयुक्तं सत्कारमिति यावत् । उपाकर्ण्य निकटवर्तित्वेनाकस्माच्छ्रुत्वा । स्विद्यदिति । स्वेदं प्राप्तौ तथा । पुलकितेति । पुलकितौ संजातरोमाञ्चौ कपोलौ यस्याः सा तथेत्यर्थः । एतेन ज्ञानाधिक्यज्ञानजन्योऽयमनुराग इति द्योतितम् । तेन पूर्वपद्यापेक्षयास्य न पौनरुक्त्यम् । तत्र तु सौन्दर्योत्कर्षस्यैवोक्तत्वात् । अत्र तु बुद्ध्यादिवैभवस्याप्यभिहितत्वाच्चेति । एतादृशी । नन्वेवं तर्हि कथं तया स्वकपोलपुलकस्वेदजालापलापनमकारीत्याकाङ्क्षां क्षपयति—विषेत्याद्युत्तरार्धेन । एतादृशी अतएव । विषेति । विषस्य गरलस्य या ज्वालास्तासां जालम्, न तु लेशम् । एतेनातिदुःसहत्वं द्योतितम् । तत्रापि झटिति शीघ्रम्, न तु विरम्य । एवं च तदेव दृढीकृतम् । वमतः । भगवत्पादप्रहारासहिष्णुत्वेनोद्गिरत इत्यर्थः । तत्रापि पन्नगेति । सर्पराजस्येत्यर्थः । एतेनाशक्यप्रतीकारत्वं ध्वनितम् ।

तत्रापि फणायाम्, न तु पुच्छादौ । यदुपतेरित्यत्राप्यनुकृष्य योज्यम् । श्रीकृष्णस्येत्यर्थः । ताण्डवेति । उद्धतनृत्यप्रकारमित्यर्थः । साश्चर्यमाश्चर्येण विस्मयेन सहितं यथा भवति तथा । कथयतितरां वारंवारं वृद्धगोपाः(पान्) प्रति निरुक्तभगवत्ताण्डववर्णनमेवोक्तरीत्या स्वानुरागव्यञ्जकस्वकपोलपुलकाद्यपलापनप्रयोजकाद्भुतरसपरिपोषपूर्वकं विनिवेदयतीत्यन्वयः । तस्या(स्या)यदा पतिव्रतानामपि श्रीकृष्णसौन्दर्यसार्वज्ञ्यादिविचित्रविविधगुणाकृष्टयेदृशं कष्टं तदा कैव कथानुभूततद्व्रत्या भवत्या इति मह्यमेव यशः प्रदाय द्रुतमद्यैव तं प्रत्यभिसर्तव्यमित्याशयः । अत्र प्रकृता परकीया मध्या मानवती नायिका वर्ण्या तूत्कण्ठितेव । ललितो नायकः । विप्रलम्भः शृङ्गारः । अपह्नुतिरलंकारः ॥

अथ वैदेह्यास्तु 'राजानं जनयांबभूव' इत्याद्येक(दिद्वा)षष्टिपद्येन श्रीरामेण मुखारविन्दवर्णनतोऽभिनन्दने कृतेऽपि परम सात्विकत्वाद्गर्वराहित्ये सत्यतीव परितुष्टोऽसौ राधायाश्चोक्तोपदेशेनातिप्रसादतोऽभिसृतायास्तादृशः श्रीकृष्णो वा सुस्वा(मुखा)द्यवयवान्वर्णयति—

**कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-**
**वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया ।**
**आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां**
**किंचासीदमृतस्य भेदविगमः साचिस्मिते सर्वदा ॥ ६९ ॥**

कैशोर इति । 'कैशोरमापञ्चदशम्' इत्यभियुक्तोक्तेर्दशवर्षोत्तरपञ्चदशवर्षपरिसमाप्तिपर्यन्तमित्यर्थः । वयस्यवस्थाविशेषे तन्व्याः कृशाङ्ग्याः । तनौ शरीरे । क्रमेणैकादशवर्षाद्यनुक्रमेण । न तु तां कार्श्यं क्षीणत्वमिति यावत् । आयात्यागच्छति सतीत्यर्थः । अत एवाखिलेश्वर ईश्वरादिजगद्व्यामोहकत्वाद्विश्वनियन्तरीत्यर्थः । एतेन वक्ष्यमाणतदाज्ञायामवश्यानुल्लङ्घनीयत्वं व्यज्यते । एतादृशे रतिपतौ न तु कामे । तेन 'यथा राजा तथा प्रजा' इति न्यायेन स्वस्याखण्डविलासशीलत्वेन स्वनियम्येषु तत्कारकत्वनैसर्ग्यं सूचितम् । तस्मिन्मदने च निरुक्ततनुरूपनगर्यवच्छेदेनागामिन्यागमिष्यति सतीत्यर्थः । अस्य निरुक्तलक्षणस्य रतिपतेराज्ञया नियोगेन तत्कालमेव तत्क्षणमेव । न तु विलम्बेनेत्यर्थः । एतेन राजाज्ञातिक्रमे सद्यःप्राणविगम इति भीतिः सूचिता । आस्ये मुखे । पूर्णेति । अत्र शशपदेन कपोले कस्तूरीमकरविरचनचतुरत्वरूपस्तरुणीस्वभावो ध्वन्यते । पूर्णपदं द्वितीयादीन्दुव्युदासार्थम् । तेन तत्र स्वनेत्रचकोरतृप्तिजननक्षमत्वं द्योत्यते । तथा नयनयोर्नेत्रयोः । अम्भोरुहामम्भस्युदके रुहन्ति 'रुह बीजजन्मप्रादुर्भावे' इति धातोर्जन्म लभन्ते तानि तथा । तेषां कमलानामित्यर्थः । एतेन तत्रातिशिशि[री]करणचणत्वं सूच्यते । तादात्म्यं भेदसहिष्णुरभेदः । पद्मरूपत्वमिति यावत् । किंचामृतस्य पीयूषत्व(स्य) श्लेषान्मोक्षस्यापीत्यर्थः । भेदविगमोऽभेदः । साचीति । वलितग्रीवं मन्दहास्य इत्यर्थः । सर्वदा न तु क्षणमात्रम् । तेनोक्तनायिकामुखवीक्षणेऽपि परमपुमर्थत्वं किं पुनस्तदास्वादन इति वर्तमानकालेऽपि त्रैगुण्यसत्वं च

द्योतितम् । आसीदभूदिति संबन्धः । इह स्वकीया परकीया वा मध्याभिसारिका नायिका । मुदितो नायकः । संभोगः शृङ्गारः । क्रामिकं रूपकं चालंकारः ॥

एवं वर्णनपूर्वकं तद्रात्रौ यथेच्छं विहारं विधाय प्रातःकाले किंचित्कार्यवशाद्योजनादर्वागेव प्रवस्य सायं समागतं श्रीरामं श्रीकृष्णं वा यामचतुष्टयविरहस्याप्यसहिष्णुतया शैवलशय्यायां स्मरवैश्वानरदाहापहानार्थं शयाना सीता राधा वा लोकोत्तरग्लानिवशात्सरभसव्युत्थानाद्यशक्तत्वेन सरसविलोकनैरेवोपचरतीति कविः संवर्णयति—

**शयिता शैवलशयने सुषमाशेषा नवेन्दुलेखेव ।**
**प्रियमागतमपि सविधे सत्कुरुते मधुरवीक्षणेनैव ॥ ६६ ॥**

शयितेति । प्रकृतनायिकेत्यार्थिकम् । शैवलेति । 'जलनीली तु शैवालं शैवलः' इत्यमराच्छैवलस्य जलनील्या यच्छयनं कुसुमादिवद्विरहाग्निसंतापशान्त्यर्थं तदुपकल्पितं तल्पमित्यर्थः । एतेन तत्रातिशीतलत्वमृदुत्वाभ्यामुक्तोपायत्वयोग्यत्वं व्यज्यते । तत्र शयिता निद्राणा सतीत्यर्थः । न तूपविष्टा नापि प्रसुप्ता । अशक्तिचिन्तौत्कण्ठ्येन तदसंभवात् । एवं चोक्तवियोगस्यातुलासह्यत्वं सूचितम् । अत एव । सुषमेति । 'सुषमा परमा शोभा' इत्यमरादलौकिकसौन्दर्यशोभैव शेषोऽवशिष्टोंऽशो यस्याः सा तथा । एतेन निरुपमकार्श्यं ध्वन्यते । एतादृश्यपि सविधे निकट एव, न तु दूरम् । आगतमप्युपगतमपि । तत्रापि प्रियं स्वप्रीतिविषयं नायकम्, न तु मानाद्यवस्थावशादनादरणीयं कान्तमिति यावत् । मधुरेति । चन्द्रमरीचिकामृतवत्कान्तचक्षुश्चकोरैकास्वादनीयत्वध्वननार्थं मधुरपदम् । एतादृशं यद्वीक्षणमतिप्रीतिरूपविशेषेण यदीक्षणमवलोकनं तेनैव । न तु प्रत्युद्गमनादिव्यापारान्तरैः । एतेन जीवितमात्रवत्वेनानुरागातिशयो द्योत्यते । परमासामर्थ्यव्यञ्जकत्वादेकवचनान्तपाठ एवेष्टः । यदि तु प्रेयो दर्शनोत्तरं प्रतीक्षणोज्जीवनाधिक्येन तद्वदनसौन्दर्यदिदृक्षाधिक्येन च वीक्षणे पानकन्यायेन विरम्य विरम्यास्वादनीयनायकलावण्यलालसेन भूयस्त्वमपि गुणत्वेनैव संभाव्यते तदा भवतु नाम बहुवचनान्त एव पाठः । वीक्षणैरिति । सत्कुरुत उपचरति स्वादरविषयीकरोतीत्यन्वयः । तत्र योग्यमुपमानमाह—नवेति । यथा हि लोके नवा शुक्लद्वितीयागतत्वेन नूतना । एतादृशी येन्दोश्चन्द्रस्य लेखा । एककलात्मकत्वेन रेखेत्यर्थः। सीतावत् । शैवेति । शिवस्य परमेश्वरस्येमानि शैवानि 'भूरम्भांसनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्' इति दक्षिणामूर्तिस्तोत्राद्युक्ताष्टवपूंषीत्यर्थः । 'ला आदाने' इति धातोस्तानि लात्याधेयतयादत्ते । गृह्णातीति यावत् । स शैवलः कालस्य सर्वाधारत्वाद्द्वितीयातिथ्याख्यः कालविशेष एव । स एव शयनं तल्पमिव तत्रेत्यर्थः । शयितादुर्लक्ष्यत्वादनतिप्रसादवत्वाच्च निद्रितेव वर्तमानापि । तथा सुषमेति प्राग्वदेव । वर्धमानकलाबीजवत्त्वेन परमदर्शनीयत्वेन च निरतिशयशोभामात्रावशेषशालिन्यपीत्यर्थः । प्रियमादरेण स्वद्रष्टृतया कंचिद्देवदत्तादिरूपं सखायमिति यावत् । मध्विति । मधुतुल्योऽस्तसमयावच्छिन्नत्वेनारक्तवर्णवत्त्वान्माक्षिकविशेषसदृशो यो रविः सूर्यस्तेन सह यदीक्षणं निरुक्तदेवदत्तकर्तृकं स्वकर्मकमवलोकनं तेनेत्यर्थः । निरुक्तदर्शनस्य तदैव संभवात्तज्जन्यपुण्यरूपकरणेनेति यावत् । सत्कुरुते सुख-

यति प्रदानेन परितोषयति तथेयमपीति संबन्धः। अत्र स्वकीयादिर्विरहिण्येव नायिका। सादरो नायकः। पूर्वार्धे विप्रलम्भोऽन्यत्र संभोगश्च शृङ्गारः। उपमालंकारः॥

अथोक्तरीत्या निकटागतमपि श्रीरामं सीता श्रीकृष्णं राधा वा विरहाग्निना दह्यमानमानसा प्रागत एव तन्नामामृतमेवोच्चैः परिदेवनपूर्वकमुच्चारयन्ती सत्यपि कथमेतावन्तं कालमपि प्रेयानपि मामुपेक्षितवानेवास्यतश्चिरोपेक्षलक्षणकार्यलिङ्गकानुमानेन त्वय्यपरिचितत्वमेव मयाध्यवस्यत इत्याशयवती परिचयहीनेव पश्यतीत्याह—

**विरहेण विकलहृदया विलपन्ती दयित दयितेति।**
**आगतमपि सा सविधे परिचयहीनेव वीक्षते बाला॥ ६७॥**

विरहेणेति। बाला द्वादशवर्षोर्ध्वषोडशवर्षप्राग्वयस्का। मुग्धेत्यर्थः। न तु मध्या। एतेनातिधैर्यवैधुर्यं ध्वन्यते। तत्रापि विरहेण स्वप्रेयोवियोगेन। न तु व्याध्यादिना। तेन नायकस्यैव प्रकृतेऽपराधित्वेन तं प्रति स्वस्या औदासीन्यसाम्यसूचनं युक्तमेवेति व्यज्यते। विकलेति। विह्वलचित्तेति यावत्। अत एव। दयितेति। वैकल्ये वीप्सा। तेन शोकातिभूमिः सूचिता। एतादृशं विलपन्ती सतीत्यर्थः। एतादृशी सा पूर्वोक्तनायिका। सविधे निकटे। आगतमपि प्राप्तमपि। एतेनावश्यपरिचरणीयत्वं सूचितम्। एतादृशं तम्। स्वकान्तमिति शेषः। परिचयेति। परिचयेन नामग्रामादिबोधपूर्वकचाक्षुषज्ञानेनापि हीना। शून्येत्यर्थः। एतेनौदासीन्यातिशयो द्योत्यते। सेत्यनेन हार्दप्रेमभर आवेद्यते। एतादृशी वीक्षते। पश्यतीत्यर्थः। तस्मान्नैवेतःपरमेवं कुर्या इति तात्पर्यम्। अतो विरहिणी मुग्धा स्वकीयादिरेव नायिका। अपराधाभासी नायकः। संभोगारम्भो विप्रलम्भश्च शृङ्गारः। उत्प्रेक्षालंकारः। परिकरकाव्यलिङ्गाद्यपि॥

इत्थमौदासीन्यमवलोक्य श्रीरामः सीतां श्रीकृष्णो राधां वा परमोत्तमनायकत्वेन स्वमात्रापराधमवधारयन्नधरादितद्रूपवर्णनेन प्रसादयति—

**अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी।**
**तनुरप्रतिमा च सुभ्रुवो न विधेरस्य कृतिं विवक्षति॥ ६८॥**

अधरेति। अयि प्रिये। इयं तवेत्यध्याहारस्तु वक्तुर्विह्वलत्वेनानुसंधानवैधुर्याद्गुणावह एव रसपरिपोषकतयेति ध्येयम्। अधरद्युतिरधरोष्ठकान्तिः, न तु पादतलदीप्तिः। एतेन चक्षुःसंनिकर्षस्य सांमुख्येन तत्रैवातिसत्वाच्चुम्बनानुरागातिशयः सूचितः। अस्तेति। अस्ता अदर्शनं गताः। भीतभटन्यायेन संकुचिता इत्यर्थः। पल्लवाः पदस्त्वतपदसौन्दर्यस्य लवो लेशो येषु ते तथा, न तु किसलयानि यया सा तथेत्यर्थः। एवं चात्र मृदुत्वारुणत्वसरसत्वातिशयो द्योत्यते। तर्हि किं ममाधर एव रम्य इत्यत आह—मुखेति। आस्यसुषमा। शशीति। शशिनः। न तु चन्द्रस्य। एतेन तत्र शशीयश्यामरूपशालित्वेन तत्कान्तौ लङ्घनार्हत्वं ध्वन्यते। तस्य या कान्तिस्तां लङ्घयत्यतिक्रामतीति तथा। तत्र क्षयित्वादिदोषग्रस्तत्वेन स्वस्यां प्रतिक्षणाधिकवर्धिष्णुत्वादिगुणगणरमणीयत्वेन च तदतिक्रमणनिपुणत्वं

व्यज्यते। नन्वथापि किं मुखमेव मामकं कमनीयमित्यत्राह—तनुरिति। चः समुच्चये। तनुर्व्यक्तिरपि सकला अप्रतिमैव। अनुपमैवेत्यर्थः। यद्वा न विद्यते प्रतिस्पर्धिनी मा लक्ष्मीरपि यस्याः सा तथेति यावत्। एतेन त्रैलोक्यसुन्दर्याः श्रियोऽपि तव सौन्दर्यमधिकमेवेति ध्वन्यते। तेन सद्यः सर्वाङ्गसंभोगाभिलाषो द्योत्यते। एतत्त्रितयं कर्तृ। अस्य वार्तमानिकस्य विधेर्ब्रह्मणः कृतिं रचनां न विवक्षति। नैव विशेषतो वक्तुमिच्छतीत्यर्थः। एवं च कल्पान्तरीयस्य तस्येयं त्वत्क्षकृतिरूपाकृतिरस्ति वा न वेति संदेह एव तव संदेह इति भावः। यदि वर्तमानकालिकस्य कस्येयं कृतिस्तावकाकृतिः स्यात्तर्ह्यन्याप्येवम्। तेन स्वाभाव्यादेव काचिद्रचिता स्यान्न तु तथा क्वापि दृश्यतेऽतः सम्यगेवेदमुक्तं नेत्याद्येवं वदन्तमपि तं भ्रूभङ्गेनैवेक्षन्तीं पुनः प्रसादनाय तत्रापि तां विशिनष्टि—सुभ्रुव इति। शोभने स्मरकार्मुकाकारे भ्रुवौ यस्यास्तादृश्याः। तवेति यावत्। एवं च स्वस्यातिकामवैकल्यं व्यज्यते। अतः सद्यस्त्वं सप्रसादं सुरतं वितरेति तात्पर्यम्। अत्रोक्तैव रुष्टा नायिका। अनुनयी नायकः। उक्त एव शृङ्गारः। प्रतीपानन्वयावलंकारौ॥

अथैवं स्तुवत्यपि श्रीरामेऽप्रसन्नायामेव सीतायां सत्यां सति मत्संनिधाने परमपतिव्रतात्वेनात्युत्तमनायिकाया अस्या मद्वयस्यायाः सुरतानुकूल्यसूचकचेष्टाविशेषात्मकसस्मितकटाक्षविक्षेपादिलक्षणप्रसादकरणानौचित्यान्मयैवेतःपरं रत्यागारादस्माद्बहिर्गन्तव्यमित्याशयेन तथा च रत्या तद्रहःसख्या काचिदन्या तादृश्येव तद्वयस्या सीतारामयोरैक्यमाकाङ्क्षन्ती तत एव परमोत्कण्ठया 'भो सखि, किं जानकी प्रसन्ना वा न वा' इति पृच्छन्ती यत्र परकीयस्यापि रावणाख्यस्य नायकस्य केवलमस्याः सौन्दर्यश्रवणमात्रजन्यविरहाग्निनैतादृश्यवस्था बभूव। तत्र स्वकीयस्य संपादितबहुवारतदुपभोगस्य श्रीरामस्य तन्निकटवर्तिनस्तदप्रसादजनिततद्विरहानलेनातुलव्याकुलीभाव इति द्योतयन्त्या नैवाद्याप्यसौ प्रसीदतातिव्यञ्जनावृत्त्या प्रतिबोध्यते—

**व्यत्यस्तं लपति क्षणं क्षणमहो मौनं समालम्बते**
**सर्वस्मिन्विदधाति किं च विषये दृष्टिं निरालम्बनाम्।**
**श्वासं दीर्घमुरीकरोति न मनागङ्गेषु धत्ते धृतिं**
**वैदेहीविरहव्यथाविकलितो हा हन्त लङ्केश्वरः॥ ६९॥**

व्यत्यस्तमिति। लपति भाषते। अङ्गेषु स्मरशरनिकरपराघातसंजातकम्पितेष्ववयवेषु सत्स्वित्यर्थः। अत्र नायिका तूक्तैव। विरही स्वकीय एव प्रतिपाद्यो नायकः। परकीयस्तु निदर्शनीय एव। विप्रलम्भः शृङ्गारः। काव्यार्थापत्तिरलंकारः॥

तदवसरे निरुक्तनायिकामानभङ्गार्थं भगवतः श्रीरामस्य प्रपूर्वपद्यस्तुतावप्यप्रसन्नराधिकाविरहव्याकुलस्य श्रीकृष्णस्य ने(चे)च्छया संपन्नपूर्णचन्द्रोदयं कविर्वर्णयति—

**उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण।**
**मुदितं च सकलललनाचूडामणिशासनेन मदनेन॥७०॥**

उदितमिति। तत्राप्येकमनिष्टमेव संपन्नमिति द्योतयति—रुदितमिति द्वितीयचरणेन। किं तर्हि न स्वाभीष्टमभूदित्यत्राह—मुदितमित्युत्तरार्धेन। चूडामणय इव रूपाद्याधिक्येन मुख्याः। स्पष्टमन्यत्। तस्मात्त्वेष्टप्रयोजकमात्रं संपन्नम्। न त्वद्यापि तदिति भावः। अत्र काव्यलिङ्गमलंकारः। अन्यत्तु प्राग्वदेव॥

अथ व्याकुलं श्रीकृष्णमेव तत्सखीं(खी) स्वस्थीकर्तुं संफुल्लेन्दीवरं सरः प्रदर्शयति—

**इदमप्रतिमं पश्य सरः सरसिजैर्वृतम्।**
**सखे मा जल्प नारीणां नयनानि दहन्ति माम्॥ ७१॥**

इदमिति। स तं(तां) प्रत्याह—सखे इति। त्वद्वचस एव तत्स्मारकत्वात्। अत्र बहुवचनान्न रामः। इह स्मृत्यलंकारः। शिष्टं तु प्राग्वदेव स्पष्टं च॥

अथैवं समुदितेऽपि चन्द्रमण्डलेऽनुपशान्तमानां जानकीं राधिकां वावलोक्य श्रीरामः श्रीकृष्णो वा परमैश्वर्यवशात्तत्कालं चरमं मारास्त्रं प्रावृट्शोभाविर्भावनं संपाद्य तद्दर्शेन तामुपालम्भतः प्रसादयामासेति कविः संवर्णयति—

**मुञ्चसि नाद्यापि रुषं भामिनि मुदिरालिरुदियाय।**
**इति सुदृशः प्रियवचनैरपायि नयनाब्जकोणशोणरुचिः॥७२॥**

मुञ्चसीति। हे मानिनि, इयं मुदिरालिः। 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरात्कादम्बिनीत्यर्थः। उदियायोदिताभूत्। एवं च मलिनयाप्यनया घनश्रेण्याभ्युदये समासादितेऽन्तर्बहिःशुद्धायाः सर्वाङ्गमुग्धायास्तव मानैकमौनत्वमनुचितमेवेति सूचितम्। त्वं त्वद्याप्येवं प्रावृडागमेऽपि रुषं क्रोधं न मुञ्चसि। तस्माद्धन्यैवासीति विरोधिलक्षणया विचक्षणत्वशून्यत्वं ध्वन्यते। इति प्रियवचनैः स्वप्रेयश्चाटुचयैः। सुदृशः। एतेन श्लेषाद्विचारशालित्वं व्यज्यते। अत एव। नयनेति। रोषसूचकलोचनकमलकोणारुणिमेत्यर्थः। अपायिषिता(अपाय्यपेता)। अगमदिति यावत्। एवं च सद्यः सुप्रसन्नाभूदिति भावः। अत्र विगतमाना स्वकीयादिर्नायिका। अनुनयी लब्धसाध्यश्च नायकः। संभोगः शृङ्गारः। लुप्तोपमादिरलंकारः॥

एवं तद्रोषावमोषपरितोषतः श्रीरामः सीतां श्रीकृष्णो राधां वाभिवर्णयति—आलोक्येत्यादिद्वाभ्याम्।

**आलोक्य सुन्दरि मुखं तव मन्दहासं**
**नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः।**
**किं चासिताक्षि मृगलाञ्छनसंभ्रमेण**
**चञ्चूपुटं चटुलयन्ति चिरं चकोराः॥ ७३॥**

मिलिन्दा भ्रमराः। अमन्दं नन्दन्तीति संबन्धः। असितेति साभिप्रायम्। अत एव।

मृगेति । त्वत्कान्त्यमृतप्राशनार्थमित्यार्थिकम् । चटुलयन्ति विकासयन्ति । एवं च मुखे प्रसादातिरेकः सूचितः । इह प्रसन्ना नायिका । प्रीतो नायकः । उक्त एव शृङ्गारः । भ्रान्तिरलंकारः ॥

**स्मितं नैतत्किंतु प्रकृतिरमणीयं विकसितं**
**मुखं ब्रूते को वा कुसुममिदमुद्यत्परिमलम् ।**
**स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं**
**लता रम्या सेयं भ्रमरकुलनम्या न रमणी ॥ ७४ ॥**

स्मितमिति । एतन्मुखमिति को वा ब्रूत इत्यन्वयः । एतेनापि प्रसादोत्कर्षस्तस्यां पद्मिनीत्वं च व्यज्यते । भ्रमरेति । एतेन कबरीसौन्दर्यातिशयः सूचितः । अत एव सेयं प्राक्कुपितापीदानीं सुप्रसन्नत्वेन प्रत्यक्षेत्यर्थः । रम्या लता । कल्पवल्लयेवेति यावत् । शिष्टं तु स्पष्टमेव । इहापह्नुतिरलंकारः । अन्यत्प्राग्वदेव ॥

एवं स्तवनोत्तरं यथेच्छं तद्रात्रौ रतिविलासं संपाद्य द्वितीयदिवस आसायं विरहवशेन व्याकुलमनाः श्रीरामः श्रीकृष्णो वा चन्द्रोदयं निरीक्ष्य तत्र सूर्यत्वमुत्प्रेक्ष्यते—

**संग्रामाङ्गणसंमुखाहतकियद्विश्वंभराधीश्वर-**
**व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।**
**अङ्गारप्रखरैः करैः कवलयन्नेतन्महीमण्डलं**
**मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥ ७५ ॥**

संग्रामेति । संग्रामः संगरस्तस्याङ्गणं स्थलं तत्रापि संमुखं न तु पृष्ठत आहताः समन्तात्खड्गधारया निहता एतादृशः कियन्तस्तादृशां दुर्लभत्वात्कतिचिदेव ये विश्वंभरा पृथ्वी तस्या अधीश्वराः पृथ्वीपतयः । क्षत्रिया इति यावत् । तेषामेव रणादौ मुख्याधिकारात् । तैर्व्यादीर्णीकृतो विदारितः । तदुक्तम्—'द्वाविव पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखं हतः ॥' इति । तत्र प्रकृत आद्यं विहायान्यस्यैव कल्पनम् । श्रीरामादेः क्षत्रियत्वात्तस्य च शृङ्गारविरोधित्वाच्च युक्तमेव । एतादृशो यो मध्यभागस्तस्य यद्विवरं छिद्रं तेनोन्मीलन्प्रकटीभवन्नभोनीलिमाकाशकार्ष्ण्यं यस्मिन्स तथेत्यर्थः । एतेन यद्ययं सूर्य एव न चन्द्रस्तर्हि कलङ्ककालिम्नः का गतिरिति शङ्काशान्तिः स्फुटिता । तथा । अङ्गारेति । अङ्गारा ज्वलत्काष्ठानि तद्वत्प्रखराः प्रकर्षेण तीक्ष्णास्तैरित्यर्थः । 'तिग्मं तीक्ष्णं खरम्' इत्यमरः । एतादृशैः करैः किरणैः । एतत्प्रत्यक्षम् । महीति । पृथ्वीतलम् । एतेन स्वानुमानेन 'अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत्' इत्यभियुक्तोक्त्या च नायमस्मान्सूर्यवत्संतापयति, ततः कथं त्वयायं सूर्य एवेत्यवधार्यत इति प्रश्नः प्रत्युक्तः । कवलयन्ग्रसन् । न तु संतापयन्नेव । तेन तत्र परमासह्यत्वं ध्वन्यते । एतादृशः सन् । अयं प्रत्यक्षः । एवं च निरुक्तधर्मितयानुभूयमा-

नत्वेन सर्वथापलापानर्हत्वं द्योत्यते । मार्तण्डः सूर्य उदेत्युदयं प्राप्नोति । नहि नहि भो भगवन्, अयं चन्द्र एवेति कृतवादं कंचित्सुहृदं प्रत्याक्षिपति—केनेत्यादि शेषेण । तथा चातस्मिंस्तद्बुद्धिलक्षणेन स्वस्य भ्रमेणाखिललोकवञ्चनं हि मौर्ख्यैककार्यम् । अतः स तत्साधर्म्यात्पशुरेवेति भावः । अत्र च्विनापि सूर्यत्वमेव दृढीकृतं बोध्यम् । इह विरही नायकः । विप्रलम्भः शृङ्गारः । हेत्वपह्नुत्यलंकारः ॥

ततः समयानुसारेणाभिसरन्तीं स्वमेव सीतां राधां वा दूरादवलोक्य श्रीरामः श्रीकृष्णो वा स्वमनस्येव तत्कटाक्षपातेन सद्यःसंमोहादिलिङ्गेन तन्नेत्रीयश्यामादिरूपे हालाहलाद्युत्प्रेक्षते—

**श्यामं सितं च सुदृशो न दृशोः स्वरूपं**
**किं तु स्फुटं गरलमेतदथामृतं च ।**
**नो चेत्कथं निपतनादनयोस्तदैव**
**मोहं मुदं च नितरां दधते युवानः ॥ ७६ ॥**

श्याममिति । सुदृशः प्रकृतमृगाक्ष्याः । दृशोर्नेत्रयोः । श्यामं कृष्णं सितं शुक्लं च स्वरूपम् । अत्र रूपपदेनैव चारितार्थ्ये स्वपदं शुक्लपटादेः काश्मीरजरसजन्यपीताद्यागन्तुकरूपव्युदासार्थमेव । तथा च कर्मधारय एवात्र न षष्ठीतत्पुरुषः । तेन स्वं नाम लक्षणया स्वभावसिद्धमित्यर्थः । न नैव भवति । किंतु । एतत्प्रत्यक्षम् । स्फुटं सर्वानुभवसिद्धम् । एतेनैकस्यैव स्वप्नदर्शनवद्भ्रमत्वं प्रत्युक्तम् । क्रमादिति शेषः । गरलं विषम् । अथानन्तरं विषत्वस्य श्यामरूपावच्छेदेनाध्यवसानोर्ध्वमित्यर्थः । अमृतं पीयूषम् । चोऽवधारणे । तेनात्र शङ्कानवकाशः सूचितः । विपक्षेऽनुकूलतर्कपराहतिमाह—नो चेदित्युत्तरार्धेन । नो चेदुक्तकल्पना नाद्रियेत चेदनयोः प्रकृतदृगवच्छिन्नश्यामादिरूपयोः । निपतनात् । नितरां सानुरागकटाक्षप्रक्षेपावच्छेदेन कान्त्यात्मना संचरणादित्यर्थः । तदैव न तु क्षणान्तरे । तेन वक्ष्यमाणकार्ये कारणान्तरसंभवव्युदासः सूचितः । युवानोऽस्मदादयस्तरुणाः । नितरामत्यन्तं न तु क्षणिकम् । तेन लोकोत्तरत्वं द्योत्यते । मोहं वैचित्यम् । मूर्च्छामिति यावत् । अनुरागस्तर्हि तत्र कथमित्यत आह—मुदमिति । हर्षमित्यर्थः । दधते धारयन्तीति संबन्धः । हालाहलस्य दर्शनान्मोहस्तथामृतस्य दर्शनान्मोदश्च समुद्रमथने प्रसिद्ध एवैवं तयोर्नीलधवले रूपे अपि शिवग्रीवासुधाकरयोरिति युक्त एवायं कार्यान्यथानुपपत्तिमूलकस्तर्क इत्याशयः । अत्राभिसारिका स्वकीयादिर्नायिका । मुदितो नायकः । संभोगः शृङ्गारः । हेत्वपह्नुतिरलंकारः ॥

ततः किंचिदग्रे समुपागतां तामालक्ष्य तद्वदनं संदेहालंकारेण वर्णयति—

**अलिर्मृगो वा नेत्रं वा यत्र किंचिद्विभासते ।**
**अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥ ७७ ॥**

अलिरिति । यत्रालिर्भ्रमरो वा मृगो वा नेत्रं वा । जात्यैकवचनम् । किंचिद्विभासते

तदिदं क्रमादरविन्दं कमलं वा मृगाङ्कश्चन्द्रो वा मृगीदृशः प्रकृतनायिकाया मुखं वास्तीत्यन्वयः। अत्र मृगीदृक्पदमुक्तयोग्यतार्थम्। शिष्टं तु स्पष्टमेव पूर्ववच्च ॥

अथातिनिकटमभिसृतां सीतां श्रीरामो राधां वा श्रीकृष्णस्तत्प्रसन्नतराननवर्णनेनाभिनन्दयति—दयिते इत्यादि द्वाभ्याम्।

दयिते रदनत्विषां मिषा-
दयि तेऽमी विलसन्ति केसराः।
अपि चालकवेषधारिणो
मकरन्दस्पृहयालवोऽलयः ॥ ७८ ॥

अयि दयिते। एतेन प्रेमप्राचुर्यं सूचितम्। ते तव। रदनेति। स्मिताविर्भूतदन्तकान्तिच्छद्मनेत्यर्थः। अमी प्रत्यक्षाः। एतेन प्रसादस्य तात्कालिकत्वेनात्यानन्दहेतुत्वं व्यज्यते। न तु स्मर्यमाणत्वेन सुखमात्रप्रयोजकत्वम्। केसराः किञ्जल्काः। एतेन तदानने शरन्मध्याह्नकालिककमलत्वं तदधरे प्रवालाधिकारुणत्वं शुक्लासु परमसूक्ष्मदन्तहीरककणिकाकान्तिषु स्वदीप्तिसंमेलनेन कुङ्कुमसंपर्कतश्चन्दनस्येव पीतवर्णकिञ्जल्काध्यवसानार्हत्वं च ध्वन्यते। हेत्वन्तरमपि तत्र निरुक्तपद्मत्वनिर्णयप्रयोजकमाह—अपि चेति चरमार्धेन। समुच्चयार्थकमेवेदं निपातद्वयम्। मकरन्देति। मकरन्दे पुष्परसे स्पृहयालवः। स्पृहाशीला इत्यर्थः। अतएव। अलकेति। त्वत्केशवेषधरा इत्यर्थः। अलयो भ्रमरा एव सन्तीति योजना। एतेन तत्केशानां कुटिलत्वनीलत्वे सूचिते। यो हि यमर्थं यतमानोऽपि न लभते स तदर्थं वेषान्तरमपि धृत्वा तं साधयत्येवेति कवचकुण्डलादौ महाभारतेऽवलोकितमेव। अतस्त्वद्वदनपद्ममकरन्दस्य लोकोत्तरत्वेन मधुपानां स्वप्नेऽप्यलभ्यत्वात्तैस्त्वत्केशवेषमासाद्य तदर्थं यत्यत इत्याशयः। इह मुदिता स्वकीयादिर्नायिका। कुशलो नायकः। संभोगः शृङ्गारः। कैतवापह्नुतिरलंकारः।

अनिशं नयनाभिरामया
रमया संमदिनो मुखस्य ते।
निशि निःसरदिन्दिरं कथं
तुलयामः कलयापि पङ्कजम् ॥ ७९ ॥

अनिशमिति। न तु दिवस एव। नयनेति। लोचनप्रिययेति यावत्। रमया लक्ष्म्या। शोभयेत्यर्थः। शब्दादिशोभा हि श्रोत्रैकवेद्येति तद्व्युदासार्थं नयनेति विशेषणं युक्तमेव। संमदिनः। 'प्रमोदामोदसंमदाः' इत्यमरादानन्दिन इत्यर्थः। एतादृशस्य ते मुखस्य वदनस्य। कलयापि षोडशभागेन नेत्रेणापि सहेत्यर्थः। एतेन सर्वांशतुलाराहित्यस्य कैमुत्यसिद्धिर्ध्वनिता। तत्र हेतुं द्योतयन्पङ्कजं विशिनष्टि—निशीति। रात्रावित्यर्थः। निःसरदिति। निःसरन्त्यपगच्छन्तीन्दिरा शोभा यस्य तत्तथा। सूर्यास्ते हि पद्मं मुकुलत्येवेति प्रसिद्धं लोके।

एतादृशं क्षणिकैश्वर्यशालि पङ्कजं पद्मं कथं तुलयाम इत्यन्वयः । तस्मान्निरुपममेवेदं तवाननमिति तत्त्वम् । अत्र प्रतीपविशेषोऽलंकारः । अन्यत्प्राग्वदेव ॥

एवं सीतां श्रीरामो राधां श्रीकृष्णो वाभिनन्द्य यथेच्छं तया सह तृतीयपुमर्थसुखमनुभूय तत्सुखपारवश्येन व्युत्थानकालानवधानात्सङ्गवे(त्सखे) किमिदं कान्तापारतन्त्र्यमायुष्मतां भवतामिति केनचिद्रहःसुहृदाक्षिप्तस्तं प्रत्याह—अङ्गैरित्यादिद्वाभ्याम् ।

**अङ्गैः सुकुमारतरैः सा कुसुमानां श्रियं हरति ।**
**विकलयति कुसुमबाणो बाणालीभिर्मम प्राणान् ॥ ८० ॥**

भो मित्र, सा पूर्वप्रकृता नायिका । कुसुमबाणो मदनः । साभिप्रायमिदम् । नायिकाङ्गैः पुष्पशोभापहारे कृते तत्पक्षपातितया तल्लक्षणबाणैर्मत्प्राणविकलीकरणं राजनीतिविरुद्धमेवेति भावः । तस्मादेतादृशविपरीतकारिपरतन्त्राणामस्माकं प्रमादोऽयं कथं नाम दोषावहः स्यात् । प्रत्युत निरुक्तवीरस्मरभट्टारकपरितोषकारित्वादसौ गुण एवेति तात्पर्यम् । अत्र लोकोत्तरसुन्दरी स्वकीयादिरेव नायिका । कोविदो नायकः । संभोगः शृङ्गारः । असंगतिरलंकारः परिकराङ्कुरश्च ॥

**खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण ।**
**खिद्यामि हन्त परितस्तद्रूपविलोकनेन विकलोऽहम् ॥ ८१ ॥**

खिद्यतीति । सा प्रकृतनायिका । कोमलेति साभिप्रायम् । अत एव पथि यान्ती सती नितम्बभारेण खिद्यतीत्यन्वयः । हन्तेति खेदे । अहं तद्रूपालोकनेन विकलः सन्परितः खिद्यामीति संबन्धः । काव्यलिङ्गादिरलंकारः । शेषमतिरोहितार्थम् ॥

अथाकस्मादागतेऽक्रूरे श्वः श्रीकृष्णे मथुरां प्रति जिगमिषौ सति सामान्यतः सर्वासामपि व्रजयुवतीनां प्राणसद्भावोऽपि तद्विरहे भारीभूत एवेति तावतैवातिदुःखितानां निशि दैवाद्राकावशेन पूर्णशरदिन्दुकान्तिरपि प्रलयानलायमाना तथा स्वस्वमन्दिरावच्छिन्नाम्बरमपि कल्पाब्धिकल्पमेवाभूदिति कविः कल्पयति—

**मथुरागमनोन्मुखे मुरारा-**
**वसुभारार्तिभृतां व्रजाङ्गनानाम् ।**
**प्रलयज्वलनायते स्म राका**
**भवनाकाशमजायताम्बुराशिः ॥ ८२ ॥**

मथुरेति । असवः प्राणास्तेषां यो भारस्तेन यार्तिः परमतमपीडा तां बिभ्रति तास्तथा तासामित्यर्थः । हरिविरहेऽन्तःसमीरोऽपि भारीभूत एव व्रजसुन्दरीणां सामान्यतस्तदा तदेकजीवितावधिकायाः श्रीराधिकायाः कैव कथा । तथात्व इत्याशयः । न

न्तर्वेदनैव, अपि तु बाह्याप्यसौ तथेति कथयति—प्रलयेत्याद्युत्तरार्धेन। 'ज्वलनो हव्यवाहनः' इत्यमरात्प्रलयकालानलवदाचरति स्मेत्यर्थः । भवनेति। 'भवनागारमन्दिरम्' इत्यपि तदुक्तेः स्वगृहावच्छिन्नव्योमापीत्यर्थः । अम्भ्विति । प्रलयकालिकसमुद्र एवेति यावत् । अत्र तैज-सत्वविपुलत्वाभ्यामेवानयोस्तत्साधर्म्यं बोध्ये । इह विरहिण्यः परकीया एव मध्या ना-यिकाः । धीरो नायकः । विप्रलम्भः शृङ्गारः । लुप्तोपमादिरलंकारः ॥

किंच न केवलं रूपवैभवेनैव जानक्यां ममात्यासक्तिः, किंतु गुणवैभवेनापीति प्रपूर्व-पद्यप्रकृतः श्रीरामः स्वरहःसुहृदं तथा श्रीकृष्णो वा पूर्वपद्योक्तरीत्या मथुरां गत्वा कंसादींश्च हत्वा राधाद्यखिलगोपिकासान्त्वनार्थमुद्धवं प्रेषयंस्तं प्रति तच्चातुर्यचमत्कारं स्मृत्वा प्रपञ्चयति—

**केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः**
**सुप्तायाः सरुषः सरोरुहदृशः संवीजनं कुर्वतः ।**
**जानन्त्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि**
**श्रान्तासीत्यभिधाय वक्षसि तया पाणिर्ममासञ्जितः ॥८३॥**

केलीति । भो मित्र, केल्याः क्रीडाया यन्मन्दिरं गृहं रत्यागारं तत्रागतस्तदर्थमुपागत-स्तस्येत्यर्थः । एतादृशं मामवलोक्येति यावत् । अत एव शनकैः । न तु तत्कालम् । नो चेन्मदागमनमनया ज्ञातमेवेति मम प्रमासंभवेन वक्ष्यमाणस्वरोषावमोषणभङ्गापत्तिः स्या-त् । आलीर्वयस्याः । इङ्गितैः सुप्तिसूचकप्रावरणग्रहणादिचेष्टितैः । न तु वाचा । तथात्वे जागरसंभवेनोक्तपतितावस्थ्यमेव । एतेन चातुर्यातिशयः सूचितः । अपास्य बहिर्निरस्य । सुप्ताया निद्राणायाः । तत्र हेतुः—सेति । किंचिद्विलम्बेनोपगतत्वान्मयि रोषं प्रकाशयन्त्या इत्यर्थः । अत एव । सरोरुहेति । कोकनदनयनाया इति यावत् । कर्मणि षष्ठीयम् । अतएव संवीजनम् । एतादृक्प्रकृतनायिकाकर्मकप्रसूनव्यजनजन्यपवनशिशिरीकरणमित्यर्थः । कुर्व-तोऽनुतिष्ठतश्चेति यावत् । निद्राणायास्तावद्रमण्याः प्रसूनव्यजनसमीरणैः शिशिरीकरणं जाग-राद्यर्थं चतुराणामुचितमेव । एतादृशस्य मम पाणिः। जानन्त्यापि । मदागमनादिज्ञातवत्यापी-त्यर्थः । अनभिज्ञयेव । अतएव । कपटेति । कपटेन व्यामीलिते विशेषेण आ ईषन्मीलि-तेऽक्षिणी यया सा तथा । तयेत्यर्थः । एतेनार्धसुप्तिबोधनं ध्वन्यते । एतादृश्या तया प्रकृत-नायिकया । कर्त्र्येत्यर्थः । एतेन क्रियाविदग्धत्वं द्योत्यते। हे सखि, त्वं श्रान्तासीत्यभिधाय संवीजनं कुर्वन्तं मां प्रति सखीबुद्ध्यैवेयं जल्पतीति प्रकाश्येति यावत् । वक्षसि । स्वहृदय इत्यर्थः । एतेनोक्तपवनशीतलेन त्वत्पाणिना तर्हि मम हृदयजाग्निप्रशमनं भवत्विति विरहा-तिरेकः प्रागुक्तसंवीजनेन परमोपकर्ता श्रान्तश्चायं पाणिरेव हृदये कार्य इति वा प्रत्युपकार-पूर्वकः स एव सूचितः । आसञ्जितः समन्तात्संघट्टितः । न तु केवलं योजितः । तेनो-त्कण्ठौत्कट्यं व्यज्यते । अत्र चतुरावेव नायिकानायकौ । संभोगः शृङ्गारः ॥

अथ पुनरपि श्रीरामः सीतायाः श्रीकृष्णो वा स्वोपनयनाद्युत्तरं रुक्मिण्याः पाणिग्रहणादि विधाय स्वमनसैव सौन्दर्यं वयःसंधिकालिकं संवर्णयति—

**मान्थर्यमाप गमनं सह शैशवेन**
**रक्तं सहैव मनसाधरबिम्बमासीत् ।**
**किं चाभवन्मृगकिशोरदृशो नितम्बः**
**सर्वाधिको गुरुरयं सह मन्मथेन ॥ ८४ ॥**

मान्थर्यमिति । मृगेति । एतेन तन्नेत्रयोरतिचपलत्वविशालत्वकृष्णत्वसरसत्वानि सूचितानि । एतादृश्याः प्रकृतनायिकायाः संबन्धीत्यर्थः । गमनं शैशवेन बाल्येन सह । मान्थर्यं मन्दत्वम् । आपेति योजना । अनयोरुभयोरपि क्लीबत्वेनोचितमेव साहचर्यम् । एवमधरबिम्बमपि । अधरोऽधरोष्ठ एव बिम्बम् । एतन्नामकं पक्वतुण्डीफलमित्यर्थः । मनसा चेतसा सहैव रक्तमारक्तं पक्षेऽनुरक्तं चासीदित्यन्वयः । किं चेति समुच्चये । तथायं प्रत्यक्षः । एतेन तस्यास्तदानीं पुरोवर्तित्वं द्योत्यते । नितम्बः कटिपश्चाद्भागः । जात्यभिप्रायकमेवैकवचनम् । तयोर्द्वित्वप्रत्यक्षात् । मन्मथेन मदनेन सहैव । सर्वाधिकः सर्वोत्कटः । एतेन सर्वात्मनादरणीयत्वं व्यज्यते । तत्रापि गुरुर्महान्पक्षे पूज्योऽभवदित्यन्वयः । तस्मादुचित एवास्यां मदनुरागातिशय इत्याशयः । इह सुन्दरी मध्या स्वकीयैव नायिका । अनुरक्तो नायकः । संभोगः शृङ्गारः । सहोक्तिरलंकारः ॥

अत्रान्तरे श्रीरामं प्रति तावत्कालिकविरहमप्यसहन्त्याः सीतायाः सखा व्रजं प्रति प्रेषितस्ततः समागतस्तावदुद्धवो वा श्रीकृष्णं प्रति राधायाः परमविरहग्लानिं वर्णयति—श्वास इति त्रिपाद्या ।

**श्वासोऽनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः ।**
**तस्याः सुभग कथेयं तिष्ठतु तावत्कथान्तरं कथय ॥ ८५ ॥**

हे सुभग शोभनैश्वर्य । एतेन परवेदनानभिज्ञाननिदानं ध्वनितम् । श्वासोऽनुमानवेद्यः । कार्पाससूत्रलेशस्य तन्नासाग्रसंयोजने विधीयमाने तत्कम्पाख्यकार्यलिङ्गकानुमानैकगम्य इत्यर्थः । अतएव । अङ्गानि हस्तपादाद्यवयवाः । शीतानि शीतलानि । इदं ह्युष्माभावसूचकत्वेन प्राणोत्क्रमणस्यैव लिङ्गं लोकादौ प्रसिद्धमेव । तथा दृष्टिरपि निश्चला । तटस्थेत्यर्थः । पूर्वोत्तरयोर्धर्मयोः समाधिव्यभिचारित्वेऽपि मध्यमस्यैवाव्यभिचारित्वेनानयोरपि तथात्वमेव ज्ञेयम् । इयं तस्याः प्रकृतनायिकायाः कथास्तीत्यन्वयः । तस्मात्त्वयातित्वरयैव तत्र गन्तव्यमिति भावः । एवमत्युक्तिवशादमङ्गलप्रायत्वेनासहिष्णुत्वात्क्रुद्ध इव श्रीरामः श्रीकृष्णो वा तं तिरस्करोति—तिष्ठत्वित्यादिशेषेण । एवं चेदं श्रोतुमपि मया नैव शक्यत इत्याशयः । अत्र विरहिणी स्वकीयादिर्नायिका । क्रुद्धो नायकः । विप्रलम्भः शृङ्गारः । काव्यलिङ्गमलंकारः ॥

ततः श्रीरामः शीघ्रं सीतामुपेत्य तत्करे स्वकरस्थापनं धमनीक्षणर्थं(?) कृत्वा तस्मात्तत्स्पर्शमात्रेण चेतनोद्गमात्स्वस्य च ततः कामिकसात्विकवेपथ्या(थ्वा)गमाच्च तत्कालं चकम्प इति कविर्व्यनक्ति—

**पाणौ कृतः पाणिरिलासुतायाः**
**सस्वेदकम्पो रघुनन्दनेन ।**
**हिमाम्बुगङ्गानिलविह्वलस्य**
**प्रभातपद्मस्य बभार शोभाम् ॥ ८६ ॥**

पाणाविति । इलासुताया भूमिनन्दिन्याः । एतेन तात्कालिकातिजाड्यं व्यज्यते । पाणौ करे । रघुनन्दनेन श्रीरामेण कृतः पाणिः सस्वेदकम्पः सन् । हिमेति । हिमं शीतमम्बु यस्याः । एतादृश्या गङ्गाया योऽनिलो वायुस्तेन विह्वलं विकलं तस्येत्यर्थः । स्पष्टमन्यत् । अत्र विरहिण्येव नायिका । सोत्कण्ठो नायकः । संभोगः शृङ्गारः । निदर्शनालंकारः ॥

अथ श्रीरामः स्वकरस्पर्शमात्रेण सद्यः सावधानां सीतां प्रपूर्वपद्योक्तरीत्या पाणिग्रहणाद्युत्तरं क्रीडागारमुपानीतां रुक्मिणीं प्रति श्रीकृष्णो वा चुम्बनार्थित्वेन तदधरं प्रवालपल्लवाधिक्येन वर्णयति—

**अरुणमपि विद्रुमद्रुं मृदुलतरं चापि पल्लवं बाले ।**
**अधरीकरोति नितरां तवाधरो मधुरिमातिशयात् ॥ ८७ ॥**

अरुणमपीति । हे बाले, द्वादशवर्षोर्ध्वाषोडशवर्षवयस्के प्रकृतनायिके । एतेनावश्यस्तवनीयत्वमप्रौढ्या ध्वन्यते । तवाधरः । अयमिति शेषः । अरुणमप्यारक्तमपि विद्रुमद्रुं 'द्रुद्रुमागमाः' इत्यमरात्प्रवालतरुमित्यर्थः । तथा मृदुलतरं परमकोमलम् । एतादृशं किसलयं पल्लवं चापि । मधुरिमेति । माधुर्योत्कर्षात् । अधरीकरोति । तुच्छीकुरुत इत्यन्वयः । तस्मात्त्वयाद्य स एव मां पाययितव्य इत्याशयः । अत्र स्वकीयैव मध्या नायिका । कामुको नायकः । संभोगः शृङ्गारः । प्रतीपविशेषोऽलंकारः ॥

ततस्तया दीयमाने स्वयंग्रहालिङ्गनादिना तृतीयपुमर्थीभूतसुरतसुखे श्रीरामः श्रीकृष्णो वा क्रामज्जानक्या रुक्मिण्या वा तात्कालिकलोचनादिसौन्दर्यं वर्णयति—नयन इत्यादिद्वाभ्याम् ।

**नयने वहतां नु खञ्जनाना-**
**मिह नानाविधमङ्गभङ्गभाग्यम् ।**
**मुखमेतु तुलां कथं सुशोभं**
**सुदृशो भङ्गुरसंपदाम्बुजेन ॥ ८८ ॥**

सुदृशः प्रकृतमृगाक्ष्याः । नयने नेत्रे । इहास्मिन्सुरतकाले । खञ्जनानाम् । खञ्जरीटाख्यपक्षिविशेषाणामित्यर्थः । नानाविधं बहुप्रकारम् । एतेन स्वभावोक्त्या तात्कालिकोऽनिर्वाच्यश्चमत्कारस्तल्लोचनयोः सूचितः । अङ्गेति । अङ्गानामवयवानां भङ्गो 'भङ्गस्तरङ्ग रुग्भेदे छेदे जयविपर्यये' इति विश्वात्पराजयो येन तच्च तद्भाग्यम् । ऐश्वर्यमित्यर्थः । एतेन तन्नयनयोस्तत्कालं खञ्जनाङ्गपराभवकारि भूरितरसामर्थ्यवत्त्वेनातिचापल्यादि द्योतितम् । वहतां नु धारयतां किम् । उत्प्रेक्षया त्वेतदपि वक्तुमशक्यमेव तयोर्निरुपमत्वात्तस्मादनिर्वचनीयमेव तद्वैभवमिति व्यज्यते । एवं चेन्निरुक्तसुन्दरतरनेत्राधिकरणत्वेन सुशोभं परमनिरन्तरशोभाशालीदमस्या मुखम् । भङ्गुरेति । नश्वरलक्ष्मीकेन का(अ)म्बुजेन पद्मेन सह तुलां कथमेतु । न कथमपीति संबन्धः । एवं चैतदुपलक्षितनिरुपमसर्वाङ्गसुन्दर्येवेयमित्याशयः । अत्रोत्प्रेक्षाप्रतीपे चालंकारौ । शेषं सर्वं प्राग्वदेव ॥

**सुदृशो जितरत्नजालया**

**सुरतान्तश्रमबिन्दुमालया ।**

**अलिकेन च हेम कान्तिना**

**विदधे कापि रुचिः परस्परम् ॥ ८९ ॥**

सुदृश इति । जितं पराजितं रत्नजालं हीरकादिरत्नकणिकाजालकं यया सा तथेत्यर्थः । सुरतेति । बिन्दवोऽत्र स्वेदजा एव । अलिकेन 'ललाटमलिकम्' इत्यमराद्भालेनेत्यर्थः । रुचिः कान्तिः । परस्परमन्योन्यं विदधे । कृतेत्यर्थः । स्वेदबिन्दुदीप्तिर्भाले तत्कान्तिश्च । तत्र प्रतिबिम्बितेत्यतिचित्रमिदानीमेतदिति तत्त्वम् । अत्रान्योन्यालंकारः । शिष्टं तु सर्वं स्पष्टमेव । नायिकादिकं च प्राग्वदेव ॥

अथ कविः सीतारामयोरेव निरुपमं दाम्पत्यमिति द्योतयंस्तथात्व एव तृतीयपुमर्थसिद्धिरिति ध्वनयति—

**परपूरुषदृष्टिपातवज्रा-**

**हतिभीता हृदयं प्रियस्य सीता ।**

**अविशत्परकामिनीभुजङ्गी-**

**भयतः सत्वरमेव सोऽपि तस्याः ॥ ९० ॥**

परपूरुषेति । परपुरुषाणां स्वकान्तभिन्नपुरुषाणां यो दृष्टिपातो दृक्संचारः स एव वज्राहतिरशनिकर्तृकक्षतिस्तया भीता त्रस्ता सतीत्यर्थः । एतेन स्वरमणेतरनिरीक्षणं तस्याः प्राणान्ताधिकदुःसहमिति द्योतितम् । तेन च परमपातिव्रत्यावधिरेव ध्वनितः । अतएव सीता जानकी प्रियस्य श्रीरामाभिधस्वप्रेयसः । हृदयमन्तःकरणमेव प्रकृतसंभोगपक्षे वक्ष एव । अविशत्प्रविवेश । तत्रैव तद्भयाभावसंभवादिति भावः । सोऽपि श्रीरामोऽपि । परेति ।

परस्य या कामिनी सुन्दरी सैव भुजङ्गी सर्पिणी। 'वेश्यापतिर्भुजङ्गः स्यात्' इति कोशाद्विटस्त्री। वेश्येति यावत्। तस्या एव प्रायः परपुरुषेक्षणप्रवृत्तिसंभवात्। तस्या यद्भयं तस्माद्धेतोरित्यर्थः। तस्याः सीताया हृदयमित्यनुषज्जते। संभोगान्तं तद्विवेचनं तु प्राग्वदेव। तत्रापि सत्वरमेव न तु विलम्बेन। तेन भीत्यतिशयः सूचितः। इदं पूर्वार्धेऽप्यपकृष्य योज्यम्। अविशदित्यादि पूर्ववदेव। एवं च प्रकृतरतान्ते गाढालिङ्गनेनैव ताभ्यां प्रसुप्तमिति संभोगपक्षे तात्पर्यम्। आद्यपक्षे तु सीतायाः सर्वदा श्रीरामहृदयैकवर्तित्वस्य पूर्वार्धे वर्णितत्वात्तस्य तस्यां निरतिशयानुरागो व्यज्यते। एतेन रुक्मिण्यास्तथात्वेऽपि श्रीकृष्णस्य तथात्वान्न तत्तृतीयपुमर्थसिद्ध्युदाहरणीभूतदाम्पत्यमिति ध्वन्यते। एवमुत्तरार्धेऽपि श्रीरामस्य निरन्तरं सीतैकान्तःकरणवर्तित्ववर्णनतस्तस्या अपि तस्मिन्नसौ तादृशः सूच्यते। अत्र स्वकीयावेव संभोगैकलीनौ नायिकानायकौ। स एव शृङ्गारः। रूपकगम्योत्प्रेक्षे अलंकारौ॥

ततः क्षणान्तरे समुत्थितां सीतां व्युत्थितः श्रीरामः प्रपूर्वपद्यप्रकृतः श्रीकृष्णो वा रुक्मिणीं पुनः सुरतलालसेन स्तनमर्दनस्यैवालिङ्गनादिना कामशास्त्रे संभोगारम्भकालिकत्वात्तद्वर्णनं कुर्वन्नत्यर्थं प्रोत्साहयति—जम्बीरेत्यादि पञ्चभिः।

**जम्बीरश्रियमतिलङ्घ्य लीलयैव**
**व्यानम्रीकृतकमनीयहेमकुम्भौ।**
**नीलाम्भोरुहनयनेऽधुना कुचौ ते**
**स्पर्धेते किल कनकाचलेन सार्धम्॥ ९१॥**

हे नीलेत्यादिसंबोधनम्। तेन रतिश्रान्तिराहित्यादिदानीं प्रसन्नत्वं व्यज्यते। यद्यपि मध्यवर्तिश्लोकत्रयेण नेत्रकोणादिवर्णनमपि कृतमथापि चरमश्लोके तयोरेव वर्णितत्वात्प्राधान्यं तत्रैव निरुक्तरतिलौल्यङ्कस्यावगन्तव्यम्। जम्बीरं प्रसिद्ध एव फलविशेषः। तच्छ्रियं तच्छोभाम्। लीलयैव न त्वायासेन। अतिलङ्घ्यातिक्रम्य। व्यानम्रीकृतेति। विशेषेणासमन्तान्नम्रीकृतौ कमनीयहेमकुम्भावुत्तमकनककलशौ याभ्यां तादृशौ सन्तावित्यर्थः। अधुना ते कुचौ कनकाचलेन सार्धं स्पर्धेते किलेत्यन्वयः। एवं च तयोर्गौरतरत्वोन्नतत्वपृथुत्वकठिनत्वातिशयः सूचितः। तस्मादेतादृशाविमौ परश्रीहर्तारौ सकलभुवनभर्त्रा मया कथं न मर्दनीयावतस्त्वमालिङ्गनमेव द्रुतं देहीत्याशयः। इह स्वकीयैव मध्या रतान्तव्युत्थिता नायिका। कामुको नायकः। संभोगः शृङ्गारः। पर्यायोऽलंकारः॥

तत्र किमिदमित्याकूतेन कटाक्षतः पश्यन्तीं तां प्रत्याह—

**अङ्गानि दत्त्वा हेमाङ्गि प्राणान्क्रीणासि चेन्नृणाम्।**
**युक्तमेतन्न तु पुनः कोणं नयनपद्मयोः॥ ९२॥**

अङ्गानीति। हे हेमाङ्गि स्वर्णवद्गौरि, त्वम्। अङ्गान्यालिङ्गनेन कुचादिसर्वावयवान्। दत्त्वा नृणाम्। ईश्वरत्वेन सर्वपुंमूलीभूतस्य ममेत्यर्थः। प्राणान्क्रीणासि चेदेतद्युक्तम्। न तु

पुनर्वारंवारम् । न तु सकृत् । नयनेति । कोणं दत्त्वा प्राणान्क्रीणासीति युक्तमिति योजना तात्पर्याद्यवशिष्टं सर्वं प्राग्वदेव । बहुतरहेममुद्रा एव दत्त्वा बहवो मणयो विक्रीयन्ते न त्वेकदेशमिति प्रसिद्धमेव लोके । परिवृत्तिरलंकारः ॥

**जितरत्नरुचां सदा रदानां**
**सहवासेन परां मुदं दधानम् ।**
**अधरीकुरुते शुभाङ्गि नासा-**
**मधुना साहसशालि मौक्तिकं ते ॥ ९३ ॥**

जितेति । अयि शुभाङ्गि भो सर्वावयवसुन्दरि प्रकृतनायिके । एतेन प्रागुक्तालिङ्गनप्रार्थनव्यञ्जनमेव द्योत्यते । ते तव मौक्तिकम् । तदुपलक्षितं नासाभूषणमित्यर्थः । एवं च नैकवचनेऽपि व्यवहारविरोधः । अधुनेदानीम् । जितेति । पराजितहीरकादिरत्नकान्तीनामित्यर्थः । एतेन प्रागुक्तप्रार्थनया तस्यां तात्कालिकं स्मितं सूचितम् । एतादृशां रदानां दन्तानाम् । सदा निरन्तरं न तु क्षणमात्रम् । सहेति परामुत्कटाम् । मुदं हर्षम् । दधानं धारयदित्यर्थः । अहो पराजितहीरादिरत्नकान्तिदन्तसंततसंगतिशालित्वेन धन्यमेवाहमिति संमदवदिति यावत् । एतेन वक्ष्यमाणप्रमादहेतुर्हर्षः सूचितः । अतएव साहसेति । विवेकशून्यमित्यर्थः । अतएव नासां नासिकामधरीकुरुते स्वासनीकरोतीति संबन्धः । इह काव्यलिङ्गादिरेवालंकारः । शिष्टं तु प्राग्वदेव ॥

**निभाल्य भूयो निजगौरिमाणं**
**मा नाम मानं सहसैव यायाः ।**
**गृहे गृहे पश्य तवाङ्गवर्णा**
**मुग्धे सुवर्णावलयो लुठन्ति ॥ ९४ ॥**

निभाल्येति । हे मुग्धे । एतेनैतादृश्यां मद्याच्ञायामपि सत्यां नाद्यापि त्वं स्वयमालिङ्गनं ददासीत्यतो नैव त्वयि तादृग्विवेक इति व्यज्यते । त्वं भूयो वारंवारं न तु क्षणमात्रं सकृद्वा । निजेति । स्वशरीरगौरतामित्यर्थः । निभाल्यावलोक्य । एतेन प्रागुक्तालिङ्गनप्रार्थने सूचिते सति तत्कालं तस्यां धन्याहमेतादृक्कुचाद्यवयववत्त्वेनेति गर्वभरात्पुनः पुनः स्ववक्षोरुहावलोकनकारित्वं द्योत्यते । सहसैवाकस्मादेव । न तु विचारपूर्वकम् । तथात्वे तस्य वक्ष्यमाणबाधायोगात् । मानं गर्वं मा याया मैव गच्छेत्यर्थः । 'यासीः' इति पाठेऽप्ययमेवार्थः । कुत इति चेत्तत्र हेतुं द्योतयति—गृहे गृह इत्याद्युत्तरार्धे शेषेण । तवाङ्गवर्णास्त्वच्छरीरसरूपाः । सुवर्णेति । हेमपङ्क्तयः । गृहे गृहे प्रतिगृहं लुठन्ति संचरज्जनपादसंपर्कैरपि चलन्तीति त्वं पश्येति योजना । एतेनात्यनादरणीयत्वं व्यज्यते । एवं च किं कुचादिगौरतायैव भूयो विलोक्य दृप्यसि, किंतु मदालिङ्गनादिनैव तत्साफल्यं कलयेत्याशयः । अत्र प्रतीपविशेषोऽलंकारः । अन्यत्सर्वं पूर्ववदेव ॥

करिकुम्भतुलामुरोजयोः
क्रियमाणां कविभिर्विशृङ्खलैः ।
कथमालि शृणोषि सादरं
विपरीतार्थविदो हि योषितः ॥ ९५ ॥

करिकुम्भेति । हे आलि अयि सखि । एतेन निरुक्तपद्यश्रवणेन रोषसंभवमाशङ्क्य सामघटकालिपदेन मया सौहार्दवशादेवेदमुक्तम् । वस्तुतस्तु त्वं लोकोत्तरनिरुपमसुन्दर्येवासीति सूचितम् । किंचाथापि त्वं कुप्यस्येव चेदन्यत्राप्येवं कुतोऽसौ न क्रियत इत्याक्षिपत्यवशिष्टत्रिपाद्या । त्वं विशृङ्खलैः । एतेन कवित्वेन क्रान्तदर्शित्वात्तैर्यत्क्रियेत तद्युक्तमेवेति प्रत्युक्तम् । एतादृशैः कविभिर्वाल्मीक्यादिभिः । उरोजयोर्निजवक्षोजयोः । करीति । गजगण्डस्थलसाम्यमित्यर्थः । तयोः कृष्णत्वादिना प्रकृतोपमानानर्हत्वमेवेति भावः । क्रियमाणां स्वस्वग्रन्थेषु प्रथ्यमानाम् । सादरं सप्रेम । कथं शृणोषि नैवैतच्छ्रोतव्यमित्यन्वयः । तत्र हेतुमर्थान्तरन्यासेन शिष्टपादेनाह—विपरीतेति । तस्मान्मय्यपि नैव रोषः कार्यः । किंत्वालिङ्गनमेव देयमिति तात्पर्यम् । अत्रापि प्रतीपविशेष एवालंकारः । शिष्टं तु सर्वमवशिष्टमेव पूर्वतः ॥

एवं प्रार्थितापि श्रीरामेण सीता श्रीकृष्णेन रुक्मिणी वा सद्यः संजातसुरतान्तश्रान्तिवशेन पुनस्तात्कालिकक्रीडानुत्सुकैवेति तदौत्सुक्यापादनार्थं तेन कस्याश्चिन्निदर्शनव्याजेनेदानीं त्वया मत्प्रार्थनानादरे कृतेऽपि संपादिते सति मया पराङ्मुखत्वे क्षणान्तरे पुनः सद्यस्त्वमेव मदालिङ्गनचुम्बनादिमत्प्रार्थनं विनैव स्वयमेव संपादयिष्यसि तदपेक्षया वरमद्य मत्प्रार्थनेनैव तत्संपादनं येन पातिव्रत्यबीजीभूतं मद्वचःपरिपालनमपि सिद्धे(ध्ये)दिति भेदेन बोध्यते—

तिरस्कृतो रोषवशात्परिष्वज-
न्प्रियो मृगाक्ष्या शयितः पराङ्मुखः ।
किं दुःखितोऽसाविति कांदिशीकया
कयाचिदाचुम्ब्य चिराय सस्वजे ॥ ९६ ॥

तिरस्कृत इति । अयि प्रिये, कयाचिन्मृगाक्ष्या । एतेन रूपयौवनादिमद एव वक्ष्यमाणरोषे हेतुर्द्योतितः । प्रियः प्रेयानपि परिष्वजन्नालिङ्गन्सन् । रोषवशात्किंचिदागमनविलम्बादिनिमित्तकक्रोधपारतन्त्र्यादित्यर्थः । तिरस्कृतः परिभर्त्सितः । अत एव पराङ्मुखः शयितो निद्रितः । अत एव किमसौ दुःखित इति कांदिशीकया 'कांदिशीको भयद्रुतः' इत्यमराद्भीतिकम्पितया सत्या । आचुम्ब्य दुःखातिरेकजन्यगाढनिद्रासंभवात्कामशास्त्रप्रसिद्धमालिङ्गनप्राथम्यमुल्लङ्घ्यैव तज्जागरादिसंपादकं चुम्बनमेवाधरकपोलादावादौ विधायेति

यावत् । चिरायेति देहलीदीपन्यायेन काकाक्षिगोलकन्यायेन वोभयान्वयि । तेन निरुक्त-चुम्बने दृढजागरपर्यन्तत्वं द्योत्यते । तादृक्कोपाद्यपगमपर्यन्तत्वं च । एवमालिङ्गनेऽपि यावत्स्वकृततिरस्कृतिजनितदुःखध्वस्तिपूर्वकरतिसमुत्थितिपर्यन्तत्वं च । सस्वज आलिङ्गित इत्यन्वयः । तस्मान्नैवं भवत्या विधेयं किंतु मद्वाक्यानादरजन्यदुष्कृतमसंपाद्यैव क्षणान्तरे तावत्सत्यां स्वस्याः कामानुतापादिपीडायामवश्यप्रदास्यमानालिङ्गनाद्यथैव मह्यं प्रदेयमित्याशयः । अत्र स्वकीयैव मध्या संबोध्या नायिका । कुशलो नायकः । काव्यलिङ्गमलंकारः ॥

एवं श्रीकृष्णवाक्यमाकर्ण्य रुक्मिण्येव तं प्रति नाहं गोपिकावत्परकीयास्मि किंतु परमधीरा स्वकीयैवास्मीति तद्वृत्तान्तवर्णनेन द्योतयति—

**चेलाञ्चलेनाननशीतरश्मिं**
**संवृण्वतीनां हरिदृश्वरीणाम् ।**
**व्रजाङ्गनानां स्मरजातकम्पा-**
**दकाण्डसंपातमियाय नीवी ॥ ९७ ॥**

चेलाञ्चलेनेति । भो नाथ, चेलाञ्चलेन निचोलपल्लवेन । आननं वदनमेव शीतरश्मिर्हिमकरस्तमित्यर्थः । न तु मुखपद्मम् । आवृण्वतीनामाच्छादयन्तीनाम् । एवं च कृष्णाभिसारिकाणां तासां प्रकाशभीत्या स्वमुखचन्द्रावरणमुचितमेवेति सूचितम् । मुखमाच्छाद्य गमनं तत्स्वभाव एवेति भावः । हरीति । अत्र युष्मदादिपदावश्यकत्वेऽपि लज्जादिना तदनुक्तिर्नानार्थकहरिपदोक्तिश्च गुण एव । हरिं कृष्णपक्षीयं चन्द्रं पक्षे श्रीकृष्णं त्वामेव द्रष्टुं शीलं यासां तासामित्यर्थः । चन्द्रदर्शनशीलं तु स्वगोपनार्थं तदुदयभीतिशङ्कयैवेत्याशयः । अकाण्डेति । आकस्मिकपतनमित्यर्थः । न तु श्लथनम् । तेन नग्ना एवाभवन्निति ध्वन्यते । स्पष्टमन्यत् । 'काण्डो नाले तरुस्कन्धे बाणेऽवसरनीरयोः' इति विश्वः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । अत्र प्रकृताप्रकृते स्वकीयापरकीये धीराध(धी)रे नायिके । कामुको नायकः । परिकरादिरलंकारः ॥

अथ कविः प्रपूर्वपद्यप्रबोधितायाः सीतायास्तद्बोधवशादेव पूर्वपद्योक्तरीत्या स्वधैर्यं ध्वनयन्त्याः प्रमोदभराद्रुक्मिण्या वा तत्कालोचितत्वेन संजातं स्मितं वर्णयति—

**अधरेण समागमाद्रदाना-**
**मरुणिम्ना पिहितोऽपि शुद्धभावः ।**
**हसितेन सितेन पक्ष्मलाक्ष्याः**
**पुनरुल्लासमवाप जातपक्षः ॥ ९८ ॥**

अधरेणेति । पक्ष्मलाक्ष्याः प्रशस्तनेत्ररोमायाः । प्रकृतकान्ताया इत्यर्थः । एतेन

निरुक्तावयवोपलक्षितयावत्स्त्रीगुणवैशिष्ट्यात्तदीयवक्ष्यमाणस्मिते वर्णनीयगुणगौरवं व्यज्यते । रदानां दन्तानाम् । अधरेण सह समागमात् । अरुणिम्ना तदारक्तत्वेन । पिहितोऽप्याच्छादितोऽपि । शुद्धभावः शुक्लत्वम् । सितेन शुभ्रेण सहितेन मन्दस्मितेन । जातपक्षः सन्संजातसहायः सन् । पुनरुल्लासं विकासमवाप प्रापेति संबन्धः । ननु हसितक्षणेऽपि नाधरसमागमापनमस्तथा च कथं तस्य वदनविकासनानुकूलमानसप्रसादप्रयुक्तक्रियाविशेषात्मकस्य तत्कालस्फुरितदन्तकान्तिनिष्ठसितत्वस्य तत्रारोपेणापि सितत्वमिति चेत्सत्यम् । निरुक्तवदनविकासे हि नासाभरणीयमौक्तिकादिसितकान्तीनां दन्तपर्यन्तप्रवेशसंभवेन प्राक्तनाधरारुणिमसंक्रमापलापेन स्वाभाविकतत्सितत्वप्राकट्यसंभवात् । तस्माद्युक्तमेवोक्तकल्पनमित्याकूतम् । अत्र प्रसन्ना नायिका । पूर्वरूपमलंकारः। तदुक्तम्—'पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम् । हरकण्ठांशुनीलोऽपि शेषः स्वयशसा सितः ॥' इति । अन्यत्सर्वं प्राग्वदेव ॥

ततः श्रीरामः श्रीकृष्णो वा सीताया रुक्मिण्या वा निरुक्तस्मितमेव प्रार्थितसुरतप्राप्तये स्तौति—

**सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि तव ।**
**वद वदने मणिरदने ताम्बूलं केन लक्षयेम वयम् ॥ ९९ ॥**

सरसिरुहेति । सरसिरुहपदं तु मनसिजादिपदवत्साध्वेव । कोशे तु 'सारसं सरसीरुहम्' इति, 'कासारः सरसी सरः' इति सरसीशब्दं गृहीत्वैवोक्तमित्यविरोधः । हे मृगाक्षि । उपलक्षणमिदं यावत्सौन्दर्यादेः । अयि यावत्स्त्रीगुणविशिष्टस्त्वरमणीत्यर्थः । एतेन वक्ष्यमाणार्थयोग्यता द्योतिता । तव । सरसीति । सरसिरुहं कमलं तस्य यदुदरं तद्वत्सुरभौ सौगन्ध्यशालिनि मनोज्ञे वेत्यर्थः । अत्र 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति वैकल्पिकपुंवद्भावान्नपुंसकत्वेऽप्युक्तरूपस्यानादिशब्दवत्साधुत्वं बोध्यम् । एतेन सौगन्ध्यात्ताम्बूलतर्कणं मुखे परास्तम् । एतादृशे । अधरितेति । अधरितं तुच्छीकृतं बिम्बं पक्वतुण्डीफलं येन तादृशोऽधरो यस्य तत्रेत्यर्थः । एतेनाधरोष्ठरागात्तत्र तत्परास्तम् । एतादृशे च । मणीति । मणय इव रदना यत्र । एतेन पूगखण्डादिनापि तत्परास्तम् । एतादृशे वदने मुखे । ताम्बूलं तच्चर्वणादि । वयं केन लिङ्गेन लक्षयेम तर्कयेम । तल्लिङ्गं त्वं वद कथयेत्यन्वयः । तस्मात्तादृशलिङ्गाभावात्ताम्बूलसेवनं विनैव त्वन्मुखस्य तथात्वेन त्वं त्रैलोक्यसुन्दर्येवासीत्याशयः । अतः सद्यः सुरतं वितरेत्याकूतम् । लुप्तोपमादिरलंकारः । अन्यत्सर्वं प्राग्वदेव ॥

एवं स्तुतापि सीता रुक्मिणी वा श्रीरामस्य श्रीकृष्णस्य वा प्राक्तनरतिक्लान्तिवशान्निकटे केवलं निद्राणाप्यर्धोन्मीलितलोचना सती सानुरागं केवलं मुखमेव पश्यतीति कविराह—

**शयिता सविधेऽप्यनीश्वरा**
**सफलीकर्तुमहो मनोरथान् ।**

**दयिता दयिताननाम्बुजं**
**दरमीलन्नयना निरीक्षते ॥ १०० ॥**

शयितेति । अपिना सामग्रीप्राचुर्यं सूचितम् । दयिता प्रकृतवनिता । दयितेति । स्वकान्तास्यकमलमित्यर्थः । इह रतिश्रान्तोक्तैव नायिका । अपरमखिलं पूर्ववदेव ॥

एवं सानुरागरागमर्धोन्मीलितया केवलं पश्यन्तीमेव परमसौकुमार्यभरेणातितरसुरतान्तक्लान्तिवशेन पुनः प्रार्थनाशतेनाप्यालिङ्गनादिसंभोगप्रदानेऽनुत्सुकतया केवलं स्वनिकटे शयानां जानकीं प्रति श्रीरामो रुक्मिणीं प्रति श्रीकृष्णो वा यदि त्वयाद्य मद्याच्ञाशतेनापि स्वयंग्रहाश्लेषादिपूर्वकं रतिप्रदानं मह्यं न क्रियते तर्हि मयेतःपरं श्वस्तनरात्रावत्र रतिमन्दिरे त्वां प्रति द्रुतं नैवागम्येत तदानीं त्वं यामचतुष्टयवियोगसंतप्ता सत्यतीव व्याकुलीभविष्यसीत्यभिसंधाय कयाचिद्विरहिण्या साध्व्या सह कस्यचित्पान्थस्य संवादं कथयति—

**किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः ।**
**कथय तथापि मुदे मम कथयिष्यति पथिक तव जाया ॥ १०१ ॥**

किमितीति । हे कृशोदरि । न तु तन्वि । एवं च मम नैसर्गिकमेव सर्वाङ्गकार्श्यमतः कथमयं न त्वत्प्रश्नस्त्वामेव भ्रान्तत्वं नयेदित्यापत्तिः प्रत्युक्ता । त्वं किमिति कृशासि । एतेन कारुणिकत्वं स्वस्य व्यज्यते । तेन यदि विरहप्रयुक्तस्मरशरव्यथया तथासि तर्हि तामहं सद्यः शमयिष्यामि सति त्वदानुकूल्य इति द्योत्यते । एवं चातुर्यातिशयेन तदाशयं निश्चित्य पातिव्रत्यादच्युतधैर्यासौ तं तिरस्करोति—किमित्यादिद्वितीयपादेन । तत्रापि 'कामातुराणां न भयं न लज्जा' इत्युक्तेस्तादृक्त्वादेव तद्वचोमात्रलाभलालसेन पुनः पृच्छति—कथयेति तृतीयेन । पुनरतितिरस्कृतावपि स नैवोपरमेदिति स्वस्याः साध्वीत्वं ध्वनयन्ती तमुपरमन्ती चोत्तरयति—कथयिष्यतीति चरमेण । एवं च सा यथा त्वद्विरहेण साध्वी चेत्कृशैव त्वयावलोक्येत तथाहमपि स्वकान्तवियुक्तत्वात्कृशास्मीत्यतस्तया शीघ्रं स्वगृहं प्रत्येव गन्तव्यमित्याशयः । प्रकृते तु तस्मात्त्वयाधुना मद्वचनादरं कृत्वा मह्यमालिङ्गनाद्यखिलरतिसुखं पुनरपि शीघ्रं देयमेव सुप्रसन्नतयेति तात्पर्यं भगवतः । अत्र प्रकृतौ रतान्तक्लान्तचतुरतरस्मरातुरौ स्वकीयावेव मध्याधीरललितौ नायिकानायकौ । संभोगः शृङ्गारः । अप्रकृतौ तु परकीयौ विरहिणीसतीपान्थकामुकौ । विप्रलम्भः शृङ्गारः । उक्तिप्रत्युक्तिरलंकारः ॥

ततः संजातविवेका तावत्कालविलम्बेन पुनराविर्भूतमदना च सीता श्रीरामेण रुक्मिणी वा श्रीकृष्णेन सुप्रसन्नत्वेन स्वमालिङ्गनादि प्रयच्छन्ती तद्रात्रौ यथेच्छमुपभुक्तापि प्रातःकाले व्युत्थिता सती गृहदीर्घिकावर्तिबिसनीविकासमनु निर्मुक्तषट्पदैस्तद्वदने निरुपमारविन्दत्वं सार्वकालिकविकासशालित्वादिना निर्णीय लोकोत्तरमकरन्दादिलोभेन तत्र परिभ्रमणे विधीयमाने तदीक्षणवशेन पुनःसमुद्दीपितमदनविकारतया तदधरामृतपानयाच्ञे

कृते सति 'प्राणं वा एते प्रस्कन्दन्ति यद्दिवा रत्या संयुज्यन्ते' इति श्रुतेर्दिवा रतिविषयक-निषेधे जागर्ति सति किमिदं स्मरपारवश्यं विश्वेशनशीलानां सर्वज्ञानामपि भवतामित्याशयेन बहिरतिसक्रोधवीक्षणपरैर्वेक्षन्ती कंचित्किमित्यद्य प्रातरुत्थाने विलम्बोऽभूदिति पृच्छन्तं रहःसुहृदं प्रति सोदन्तं तद्दृश एव सर्वोत्कृष्टत्वेन वर्ण्यन्ते—

**वदनारविन्दसौरभलोभादिन्दीवरेषु निपतत्सु ।**
**मय्यधरार्थिनि सुदृशो दृशो जयन्त्यतिरुषापरुषाः ॥ १०२ ॥**

**इति पण्डितराजश्रीजगन्नाथविरचिते भामिनीविलासे शृङ्गारविलासो द्वितीयः ।**

वदनेति । हे मित्र, वदनं प्रकृतकान्ताया मुखमेवारविन्दं कमलं तस्य यत्सौरभं सौगन्ध्यं तस्य यो लोभोऽभिलाषस्तस्मादित्यर्थः । इन्दीवरेषु । 'भ्रमरश्चञ्चरीकः साद्रोलम्बो मधुसूदनः । इन्दीवरः पुष्पकीटो मधुद्रो मधुकेशटः ॥' इति त्रिकाण्डशेषाद्भ्रमरेष्वित्यर्थः । निपतत्सु वदनपद्ममभितः परिभ्रमत्सु सत्स्वित्यर्थः । तदानीमेवोद्दीपनवशादधरार्थिनि तदधरामृतपानेच्छौ मयि विषये । सुदृशः प्रकृतमृगाक्ष्याः । अतिरुषापि परमकोपेनापि । अपरुषा इति छेदः । अकठोरा एव । एतेन हार्दप्रेमा ध्वन्यते । एतादृशो दृशो दृष्टयो जयन्ति कोपेऽप्यपरुषत्वादेव सर्वोत्कर्षेण वर्तन्त इति योजना । इह धर्मबोधिनी स्वकीया मध्यैव नायिका । गुणज्ञो नायकः । संभोग एव शृङ्गारः । भ्रान्त्यादिरलंकारः । जयवर्णनादन्ते मङ्गलमपि ॥

**इति प्रणयप्रकाशे द्वितीयः प्रमोदः ।**

## करुणविलासः ।

एवं तृतीयः कामाख्यः पुरुषार्थोऽपि स्वकीयया सहैव संपाद्यो न परकीययापि सह नापि परकीययैव सहेति श्रीरामादिनिदर्शनेन द्योतयित्वाधुना क्रमप्राप्तस्य मोक्षाख्यचतुर्थपुमर्थस्य ज्ञानैकसाध्यत्वात्तस्य च भक्तिविरक्त्यादिप्रयोज्यत्वात्तस्यापि प्रायः शोकमन्तरा संभवाभावान्निर्वेदस्थायिभावाख्यं शान्तरसं चतुर्थविलासे वर्णयिष्यन्नत्र तृतीये विलासे शोकस्थायिभावं करुणरसं श्रीरामस्य सीतारसातलप्रवेशोत्तरकालिकैर्वाक्यैरेव व्यनक्ति—दैवे परागित्याद्या प्रकरणसमाप्ति ।

**दैवे पराग्वदनशालिनि हन्त जाते**
**याते च संप्रति दिवं प्रति बन्धुरत्ने ।**
**कस्मै मनः कथयितासि निजामवस्थां**
**कः शीतलैः शमयिता वचनैस्तवाधिम् ॥ १ ॥**

जानक्या रसातलप्रवेशादिकं तूक्तं महारामायण एवोत्तरकाण्डे—'सर्वान्समागतान्दृष्ट्वा सीता कौशेयवासिनी । उदङ्मुखा ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ॥ यथाहं राघवादन्यं मनसापि न चिन्तये । तथा मे माधवी देवि विवरं दातु मर्हसि ॥ तथा वदन्त्याः सीतायाः प्रादुरासीत्समन्ततः । भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम् ॥ ध्रियमाणं शिरोभिस्तदुदतिष्ठद्दुरासदम् । दिव्यं दिव्येन वपुषा नागैरमितविक्रमैः ॥ तस्मिंस्तु धरणी देवी सीतां संगृह्य बाहुना । स्वागतं तेत्युवाचैनामासने चोपवेशयत् ॥ तामासनगतां सीतां प्रविशन्तीं रसातलम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥' इत्याद्यासर्गान्त(न्तं) ज(त)द्विस्मयादिकमुक्त्वाग्रिमसर्गे तावच्छ्रीरामशोकोऽप्युक्तः—'दण्डकाष्ठमवष्टभ्य शोकव्याकुलितेन्द्रियः । अवाक्शिरा दीनमना रामोऽप्यश्रूण्यवर्तयत् ॥ क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् । अभूतपूर्वशोको मे पुनः संद्रष्टुमिच्छति ॥' इति । हे मनः । एतेन वस्तुतः स्वस्याखण्डानन्दाद्वैतसच्चिदानन्दब्रह्मैकरूपत्वेन शोकलेशस्याप्यभावेऽपि लोकानुग्रहार्थं मायिकमनुष्यनाट्यपटुलीलाविग्रहशालितया जगदीशस्यापि मे यदा विषयसङ्गेन शोकत्वं तदा जीवकोटिनिविष्टानां भवतां कैव कथेत्यतः सर्वात्मना विषयसङ्गपरित्याग एवाहरहः कार्य इति मनःसंबोधनतात्पर्यं व्यज्यते । दैवे प्रारब्धकर्मणि । परागिति । पराङ्मुख इत्यर्थः । जाते सति । चः समुच्चये । अत एव संप्रतीदानीं बन्धुरत्ने 'बन्धु बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वाद्बन्धूनां बान्धवानां सर्वसंबन्धिनां मध्ये रत्नमिव श्रेष्ठं तस्मिन् । एतादृशे सीताख्ये । कलत्र इति यावत् । हन्तेति खेदे । दिवं प्रति रसातलाभिधबिलस्वर्गं प्रतीत्यर्थः । याते गते सति । एवं चैतस्य दुष्परिहरत्वाद्वक्ष्यमाणाक्षेपार्हदुःखहेतुत्वं ध्वन्यते । त्वं निजां स्वकीयाम् । अवस्थां लोकोत्तरशोकदशां कस्मै कथयितासि । न कस्मा अपीत्यर्थः । एतेन 'सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु योषित्सु । करुणाशालिनि भूपे निवेद्य दुःखं

सुखी भवति ॥' इत्युक्तदुःखशामकस्थलवैकल्यं व्यज्यते। तेनास्य दुःखस्य लोकविलक्षणत्वं सूच्यते। अत एव कः शीतलैः शिशिरैर्वचनैरमृतोपमसान्त्ववाक्यैरित्यर्थः। तवाधिं शमयिता। न कोऽपीत्यन्वयः। एवं च निरवधिक एवायं शोकस्तवेति भावः। इह यावत्प्रकरणसमाप्ति संतप्तो नायकः। करुण एव रसः। काव्यलिङ्गादिरलंकारश्च तत्र तत्र यथार्थमूह्यः॥

**प्रत्युद्गता सविनयं सहसा पुरेव**
**स्मेरैः स्मरस्य सचिवैः सरसावलोकैः।**
**मामद्य मञ्जुरचनैर्वचनैश्च बाले**
**हा लेशतोऽपि न कथं शिशिरीकरोषि॥ २ ॥**

प्रत्युद्गतेति। अयि बाले। यद्यप्यस्यास्तदानीं परोक्षत्वेन संबोधनानर्हत्वमेव तस्य प्रत्यक्षैकविषयत्वात्तथापि वक्तुर्विरहोत्कर्षेण तदेकमनस्कतया मानसीं तां पुरःस्थितामिवेक्षित्वैव तदौचित्यमिति ज्ञेयम्। एवमेवाग्रेऽपि यावत्संबोधनेषु बोध्यम्। त्वं पुरेव प्रागिव। एतेन स्मृत्याख्यव्यभिचारिभावो व्यज्यते। सहसा। एवं च स्वागमनजन्यसंभ्रमः सूच्यते। तत्रापि सविनयं विनयपूर्वकं यथा भवति तथा न त्वौद्धत्येन। एतेन सतीधर्मधौरेयत्वं ध्वन्यते। प्रत्युद्गता। स्वरतिमन्दिरान्मन्दं मन्दं मदभिमुखमागता सतीत्यर्थः। स्मरस्य मदनस्य सचिवैः। समर्थसहायैरित्यर्थः। इदं हि विशेषणं सर्वतृतीयाबहुवचनान्तविशेष्येष्वपि योज्यम्। एतादृशैः स्मेरैर्मन्दहासैः। तथा। सरसेति। सप्रेमनिरीक्षणैरित्यर्थः। एतेन रत्युत्कर्षः सूचितः। तथा। मञ्ज्विति। भोः प्राणनाथ, चरणारुणराजीवरेणवोऽनन्यया मयाद्येदं मोदैपायं (?) निवेद्यत इत्यादिरूपातिरम्यरचनैरित्यर्थः। एतेन लौकिकशास्त्रीयोभयचातुरीचमत्कारचञ्चुरत्वं सूचितम्। एतादृशैर्वचनैश्च वाक्यैरपीत्यर्थः। हा इति खेदे। एवं च तत्कालं मूर्छया भूतलनिपातो द्योत्यते। मां लेशतोऽपीषदपि कथं न शिशिरीकरोषि शीतलयसीत्यन्वयः॥

**सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता**
**विद्यापि खेदगलिता विमुखीबभूव।**
**सा केवलं हरिणशावकलोचना मे**
**नैवापयाति हृदयादधिदेवतेव॥ ३ ॥**

सर्वेऽपीति। अत्र क्रमात्पूर्वार्धपादाभ्यां गीतादिविषयान्तरैश्चित्तशान्तिसंपादनमद्वैतचितिचिन्तनेन वा तत्संपादनं च व्युदस्तम्। अपिशब्दाभ्यां शोकोत्कर्षः सूचितः। एवमुत्तरार्धेन तु सीताविषयकं श्रीरामस्य ताटस्थ्यं ध्यानतो ध्वनितम्। शिष्टं सर्वं स्पष्टमेव। 'पृथुकः शावकः शिशुः' इत्यमरः। उपमालंकारः॥

निर्वाणमङ्गलपदं त्वरया व्रजन्त्या
मुक्ता दयावति दयापि किल त्वयासौ ।
यन्मां न भामिनि निभालयसि प्रभात-
नीलारविन्दमदभङ्ककरैः कटाक्षैः ॥ ४ ॥

निर्वाणेति । भो भामिनि । एतेन 'कोपना सैव भामिनी' इति कोशात्किं कोपवशादन्तर्धानमापन्नासीत्युत्प्रेक्षा व्यज्यते । त्वं यद्यस्मात्कारणान्माम् । प्रभातेति । प्रभाते प्रातःकाले यानि नीलारविन्दानीन्दीवराणि । एतेन तेषां विकासोन्मुखत्वं तात्कालिकपवनचापल्यं च सूचितम् । तेषां यो मदः सौन्दर्यगर्वस्तस्य यो भङ्गस्तं कुर्वन्तीति तथा । एवं च कटाक्षेषु लोकोत्तरनीलत्वचापल्यादि च द्योत्यते । एतादृशैः कटाक्षैर्न निभालयसि नैवावलोकयसि । तस्माद्धे दयावति नैसर्गिकानुकम्पाशालिनि प्रिये । निर्वाणेति । अमृतरूपाद्वैतशिवात्मस्थानमित्यर्थः । अत एव त्वरया शीघ्रं व्रजन्त्या गच्छन्त्या । एतादृश्या त्वयासौ स्वाभाविकत्वेन प्रसिद्धा । दयापि मद्विषयककृपापि मुक्ता किल त्यक्तैवेति संबन्धः । न हि धर्मसत्त्वे निर्धर्मककैवल्याप्तिर्घटत इत्याकूतम् ॥

धृत्वा पदस्खलनभीतिवशात्करं मे
यारूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्या-
मारोहसीति हृदयं शतधा प्रयाति ॥ ५ ॥

धृत्वेति । 'अश्मेव त्वं स्थिरा भव' इति मन्त्रेण कन्यायाः शिलाधिरोहणं प्रसिद्धमेव वैवाहिके । द्याम् । बिलस्वर्गाख्यरसातलगमनप्रार्थनक्षणाविर्भूतभूमिदेव्यङ्कितरत्नसिंहासनमित्यर्थः ॥ विलासनीति संबोधनेन स्वाभाविकविलासस्तव मां विना कथं सिद्ध्येदतः स्वर्गाप्तिरपि निःस्वभावत्वेन स्वरूपशून्यायाः कथं पुरुषार्थ इत्याक्षेपान्तरमपि द्योत्यते । इति हेतोर्मे हृदयमिति योजना ॥

निर्दूषणा गुणवती रसभावपूर्णा
सालंकृतिः श्रवणकोमलवर्णराजिः ।
सा मामकीनकवितेव मनोभिरामा
रामा कदापि हृदयान्मम नापयाति ॥ ६ ॥

निर्दूषणेति । विशेषणचतुष्टयं तु पक्षद्वयेऽपि स्पष्टमेव । श्रवणेति । श्रवणं श्रोत्रं तस्य कोमलानुद्वेजकत्वादतिप्रिया वर्णराजिर्भणितादिक्षणोच्चारिताक्षरपङ्क्तिः । पक्षे 'तपःस्वा-

ध्यायनिरतम्' इत्यादिग्रथिताक्षरसरणिर्यस्याः सा तथेत्यर्थः । एतादृशी सा पूर्वानुभूता । मामकीनेति । ममेयं मामकीना मदेकमुख्यवर्णनपरत्वेन मत्संबन्धिनी श्रीमद्वाल्मीकिविरचितमहारामायणाभिधकवितेवेति यावत् । स्पष्टमन्यत् । अत्र कविवाक्यत्वभ्रान्तिस्त्वनालोचितपूर्वापरतात्पर्यतया विदुषामपि केषांचिदास्तां नाम परिपक्काम्रफलविशेषे सिन्दूरधीरिव का नः क्षतिस्तावतास्वादितरसानामितररसानां चेति दिक् ॥

**चिन्ता शशाम सकलापि सरोरुहाणा-**
**मिन्दोश्च बिम्बमसमां सुषमामयासीत् ।**
**अभ्युद्गतः कलकलः किल कोकिलानां**
**प्राणप्रिये यदवधि त्वमितो गतासि ॥ ७ ॥**

चिन्तेति । असमामतुल्याम् । निरुपमामित्यर्थः । अयासीत् । प्रापेति यावत् । शिष्टं तु स्पष्टमेव । इह क्रमेण त्रिपाद्यां चरमचरणेन सीतालोचनादेराननस्य स्वनस्य चाभावो हेतुत्वेन ध्वनितः ॥

**सौदामनीविलसितप्रतिमानकाण्डे**
**दत्वा कियन्त्यपि दिनानि महेन्द्रभोगान् ।**
**मन्त्रोज्झितस्य नृपतेरिव राज्यलक्ष्मी-**
**र्भाग्यच्युतस्य करतो मम निर्गतासि ॥ ८ ॥**

सौदामनीति । 'तडित्सौ[दा]मनी विद्युत्' इत्यमराद्विद्युद्विक्रीडितसमत्वेन क्षणिकानित्यर्थः । एतेन दशसहस्रवर्षपर्यन्तत्वेऽपि वक्ष्यमाणविषयभोगेष्वनुपमसुखत्वेन तद्ध्वंसकाले क्षणिकत्वमतिरुचितैवेति द्योतितम् । एतादृशान् । महेन्द्रेति । महानिन्द्रो येन 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेर्हिरण्यगर्भान्तसकलविषयानन्दकूटस्थसाद्वैतब्रह्मानन्दस्यैव ये भोगा इव तानित्यर्थः । एतेन तेष्वलौकिकविषयानन्दत्वं व्यज्यते । कियन्त्यपि दिनानि यत्किंचित्कानिचिदहानि । मन्त्रेति । मन्त्रेण संध्यादिकरणगूढविचारेणोज्झितस्त्यक्तस्तस्य । विषयासक्त्या प्रमादेन तस्य विस्मृतत्वेनैतस्य दौष्ट्यमवेक्ष्यते । नैव परित्यक्तस्यैवेत्यर्थः । मम करतोऽकाण्डेऽनवसर एवाकस्माद्वा निर्गतासीति संबन्धः ॥

**केनापि मे विलसितेन समुद्गतस्य**
**कोपस्य किं नु करभोरु वशंवदाभूः ।**
**यन्मां विहाय सहसैव पतिव्रतापि**
**यातासि मुक्तिरमणीसदनं विदूरम् ॥ ९ ॥**

केनापीति । विलसितेन । लीलाचरितविनोदादिनेत्यर्थः । समुद्गतस्याविर्भूतस्य । वशंवदा । स्वाधीनेत्यर्थः । अभूः किं नु । मुक्तीति । एवं च सत्यात्पतिव्रताया अपि तव तत्र गमनौचित्येऽपि पातिव्रत्यादेवेदमनुचितमेवेत्यपिना ध्वन्यते । शिष्टं तु स्फुटमेव ॥

**काव्यात्मना मनसि पर्यगमन्पुरा मे**
**पीयूषसारसरसास्तव ये विलासाः ।**
**तानन्तरेण रमणीरमणीयशीले**
**चेतोहरा सुकविता भविता कथं नः ॥ १० ॥**

काव्यात्मनेति । हे रमणीरमणीयशीले रमणीनां सुन्दरीणां मध्ये रमणीयं पातिव्रत्यादिगुणैर्लोकोत्तरं शीलं चारु चरितं यस्याः सा तथा । तत्संबुद्धावित्यर्थः । एतेन भार्यान्तरोद्वाहशङ्का प्रत्युक्ता । पुरा मे मनसि तव ये विलासाः काव्यात्मना । श्रीवाल्मीकिविरचितमहारामायणात्मककाव्यरूपेणेत्यर्थः । तत्र सीतावर्णनस्य प्रचुरतरत्वात् । पर्यगमन् । पूर्वं तच्छिष्यकुशलवगीतश्रवणद्वाराभिसंजग्मुरिति यावत् । 'पर्यणमन्' इति पाठे तु परिणामप्राप्ता इत्यर्थः । परिणामो हि तात्त्विकोऽन्यथाभावः । स तु प्रकृते वास्तविको नैव संभवति । विलासानां विलोलावलोकनादीनां क्रियाविशेषात्मकत्वेन त्रिक्षणावस्थायित्वात्काव्यस्य च प्रबन्धविशेषात्मकत्वाच्च दुग्धदध्यादिवत्तयोः परिणामिपरिणामभावस्य हिमहेमाचलवत्स्वप्रेऽप्यसंभावितत्वात् । तस्मादत्रानन्दजनकत्वमात्रसादृश्येनोभयोः कार्यकारणभावः परिणामालंकारध्वननार्थमारोपित इत्येवावश्यं वाच्यम् । तत्रापि तादृङ्निबन्धाभिव्यञ्जकपुस्तकमात्रेण नैव रसोत्पत्तिः किंतु तद्व्यञ्जितशब्दश्रवणादिनैवेति सर्वानुभवसिद्धम् । तथा च प्रकृते निरुक्तमहारामायणनिबन्धश्रवणद्वारा जायमानमानसवृत्तिविशेषरूपे रसरूपानन्दजनके शाब्दबोध एव प्रकृतनायिकाविलाससमकक्षानन्दजनकत्वेन तत्परिणामत्वोक्तिर्युक्तैवेति दिक् । न चेदं वक्रमिवेति सांप्रतम् । प्रकृतस्य पद्यस्य रामवाक्यत्वोपपादनेनातिसारल्यात् । तानन्तरेण तद्राहित्येन । नोऽस्मद्वर्णनैकप्रधाना । अत एव सुकविता । निरुक्तरामायणाख्यमहाकाव्यरचनेत्यर्थः । चेतोहरा मन्मनोहरणनिपुणा कथं भविता भविष्यतीत्यन्वयः । यद्वा सुकविता नश्चेतोहरा कथं भवितेति संबन्धः ॥

**या तावकीनमधुरस्मितकान्तिकान्ता**
**भूमण्डले विफलतां कविषु व्यतानीत् ।**
**सा कातराक्षि विलयं त्वयि यातवत्यां**
**राकाधुना वहति वैभवमिन्दिरायाः ॥ ११ ॥**

या तावकीनेति । हे कातराक्षि, या । तावकीनेति । त्वदीयमुग्धस्मेरदीप्तिवद्रम्येत्यर्थः । एतादृशी राका पूर्णमासी निशा भूमण्डले कविषु वाल्मिकिप्रभृतिषु विफलतां सत्याम् ।

उक्तस्मितकान्तौ किं राकारजन्येति 'दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना' इत्यादिवन्नि-ष्प्रयोजनतामिति यावत्। व्यतानीत्। परिविस्तारिताभूदित्यर्थः। तावकीनेत्यादि सप्तम्यन्त-पाठे तु भूमण्डलविशेषणमिदम्। सा त्वयि विलयं यातवत्यां सत्याम्। अधुनेन्दिराया लक्ष्म्या वैभवमैश्वर्यं वहतीति योजना॥

**मन्दस्मितेन सुधया परिषिच्य या मां**
**नेत्रोत्पलैर्विकसितैरनिशं समीजे।**
**सा नित्यमङ्गलमयी गृहदेवता मे**
**कामेश्वरी हृदयतो दयिता न याति॥ १२॥**

मन्देति। मन्दहासरूपयेत्यर्थः। यद्यपि स्मितपदस्यैव 'ईषत्फुल्लकपोलाभ्यां कटाक्षै-रप्यनुल्बणैः। अदृष्टदशनो हास्यो मधुरस्मितमुच्यते॥' इति शार्ङ्गदेवोक्तेर्मन्दपदव्यावर्त्यं व्या-वृत्तिपूर्वकमृदुत्वबोधकत्वेन तस्य वैयर्थ्यमेव, तथापि शोकपारवश्येन प्रकृतवक्तुस्तादृगन-वधानध्वनने करुणरसपरिपोषकत्वात्सार्थक्यमेवेति ध्येयम्। सुधयामृतेन। या मां परिषिच्य विकसितैः। नेत्रेति। नयनेन्दीवरैः। बहुवचनं तु तत्कटाक्षाभिप्रायेणैव। अनिशं समीजे सम्यगाराधयामासेत्यन्वयः। कामेति। कामस्येश्वरी। दातृत्वेन नियन्त्रीत्यर्थः। शिष्टं तु सरलमेव। गृहदेवता हि लोके गृहिभिः पूज्यतेऽभिषेकाद्युपलक्षितानेकोपचारैः। प्रकृते तु सैवैनमर्चयामासेति महदाश्चर्यम्। स च पुमर्थावि(व)धिश्च ध्वनितः॥

**भूमौ स्थिता रमण नाथ मनोहरेति**
**संबोधनैर्यमधिरोपितवत्यसि द्याम्।**
**स्वर्गं गता कथमिव क्षिपसि त्वमेण-**
**शावाक्षि तं धरणिधूलिषु मामिदानीम्॥ १३॥**

भूमाविति। हे एणशावाक्षि, त्वं भूमौ स्थिता सतीयम् 'रमण, नाथ, मनोहर,' इति संबोधनैर्या स्वर्गमधिरोपितवत्यसि। तं मामिदानीं स्वर्गं गता सती धरणिधूलिषु कथमिव क्षिपसीति योजना। एणो हरिणस्तस्य शावः शिशुः। स्पष्टमपरम्॥

**लावण्यमुज्ज्वलमपास्ततुलं च शीलं**
**लोकोत्तरं विनयमर्थमयं नयं च।**
**एतान्गुणानशरणानथ मां च हित्वा**
**हा हन्त सुन्दरि कथं त्रिदिवं गतासि॥ १४॥**

लावण्यमिति। उज्ज्वलं लावण्यमित्यादि यथाक्रममेकैकविशेषणमेकैकस्मिन्गुणेऽन्वितं

बोध्यम् । अशरणान्न विद्यते शरणं रक्षितृ येषां तान् । एतेनान्यत्रैतेनैव वर्तन्त इति द्योतितम् । एतादृशानेतान्गुणान् । अथ मां चेत्यादि सरलमेव । एवं च साहचर्यात्स्वस्याप्यशरणत्वं व्यज्यते । त्रिदिवं तृतीया द्यौर्यस्मात्स त्रिदिवः पूर्वोक्तरीत्या भौमस्वर्गस्तमित्यर्थः ॥

**कान्त्या सुवर्णवरया परया च शुद्ध्या**
**नित्यं स्विकाः खलु शिखाः परितः क्षिपन्तीम् ।**
**चेतोहरामपि कुशेशयलोचने त्वां**
**जानामि कोपकलुषो दहनो ददाह ॥ १५ ॥**

कान्त्येति । स्विकाः । अग्निसंबन्धिनीरित्यर्थः । शिखा ज्वालाः । क्षिपन्तीम् । तिरस्कुर्वाणामिति यावत् । चेतोहरामपि मनोहरामपि । हे कुशेयलोचने । अयि शतपत्रनेत्र इत्यर्थः । त्वाम् । कोपकलुषः । प्रागुक्तस्वशिखातिरस्कारित्वाद्गौरिमादिगुणगरिमजन्यरोषदूषितचित्तः सन्निति यावत् । तत्रापि स्वभावाद्दहनः कृशानुरेव ददाहेत्यहं जानामीति गम्योत्प्रेक्षया संबन्धः । यद्यप्यत्र सीता प्रत्यक्षतो रसातलं गतैव तथापि शोकोन्मादात्तस्यामुक्तहेतुकदहनदग्धत्वोत्प्रेक्षणमुचितमेवेति भावः । अपिना दाहानौचित्यं द्योत्यते । एवं परया शुद्ध्येति परमपातिव्रत्यम् ॥

**कर्पूरवर्तिरिव लोचनतापहन्त्री**
**फुल्लाम्बुजस्रगिव कण्ठसुखैकहेतुः ।**
**चेतश्चमत्कृतिपदं कवितेव रम्या**
**नम्या नरीभिरमरीव हि सा विरेजे ॥ १६ ॥**

कर्पूरेति । 'अनुक्रोशोऽप्यथो हसः' (?) इत्यमरादमरीव हि सा । अमरीव देवीव । एतादृशी सा प्रकृता सीता । इदानीं नरीभिर्नरस्त्रीभिर्नम्या स्वर्गतत्वेन नमस्कारार्हा एतादृशी विरेजे शुशुभ इति योजना । एवं चैतावत्कालं तासामप्यसौ दृष्टिगोचरापि नाभूदिति तदीक्षणदौर्लभ्यं ध्वन्यते । तत्र हेतुरवशिष्टत्रिपाद्या । रम्येति कविताविशेषणमेव । एवं च मबाह्याभ्यन्तरिन्द्रियकायसुखसाधनत्वं तस्यां ध्वनितम् ॥

**स्वप्नान्तरेऽपि खलु भामिनि पत्युरन्यं**
**या दृष्टवत्यसि न कंचन साभिलाषम् ।**
**सा संप्रति प्रचलितासि गुणैर्विहीनं**
**प्राप्तुं कथं कथय हन्त परं पुमांसम् ॥ १७ ॥**

स्वप्नान्तरेऽपीति। हे भामिनीति। एतेन 'कोपना सैव भामिनी' इत्यमरात्किं कोपविशेषपारवश्यादेवैवं कृतवत्यसीत्युत्प्रेक्षा ध्वन्यते। या त्वं स्वप्नान्तरेऽपि पत्युरन्यं साभिलाषं यथा भवति तथा कंचन न खलु दृष्टवत्यसि। सा संप्रति। हन्तेति खेदे। गुणैर्विहीनम्। एतेन परकीयाणामपि तत्राभिलाषविषयत्वाभावात्किं पुनः स्वकीयायास्तव तथात्वमिति द्योत्यते। एतादृशं परं पुमांसमद्वैतात्मानं प्राप्तुं कथं प्रचलितासीति कथयेत्यन्वयः॥

**दयितस्य गुणाननुस्मरन्ती**
**शयने संप्रति या विलोकितासीत्।**
**अधुना खलु हन्त सा कृशाङ्गी**
**गिरमङ्गीकुरुते न भाषितापि॥ १८॥**

दयितस्येति। दयितस्य प्रियस्य। ममेति यावत्। गुणाननुस्मरन्ती। एतादृशी या संप्रतीदानीं शयने विलोकितासीत्। हन्तेति खेदे। सा कृशाङ्गी भाषितापि गिरमपि निरुक्तवाक्यावलिमपि। अधुनेदानीमेव नाङ्गीकुरुते खलु नैव प्रत्युत्तरप्रदानेन चेष्टासूचितानुमोदनेन वा स्वीकरोतीति संबन्धः। शोकजन्योन्मादवशादेवेदं सर्वमित्याशयः। अन्यथा रसातलप्रवेशोत्तरं तद्दर्शनादेः सुतरामसंभवात्॥

अथ ब्रह्मादिभिर्बोधितः सन् श्रीरामः किंचित्सावधान इव तद्वाक्यादेः सर्वजनस्तव्यत्वं व्यनक्ति—

**रीतिं गिराममृतवृष्टिकरीं तदीयां**
**तां चाकृतिं कृतिवरैरभिनन्दनीयाम्।**
**लोकोत्तरामथ कृतिं च सुधारसार्द्रां**
**स्तोतुं न कस्य समुदेति मनःप्रसारः॥ १९॥**

**इति पण्डितराजश्रीजगन्नाथविरचिते भामिनीविलासे**
**करुणाविलासस्तृतीयः।**

रीतिमिति। कृतिवरैः कुशलश्रेष्ठैरित्यर्थः। सुधेति। इदं हि विशेषणं विशेष्यत्रयेऽप्यन्वेति। न च प्रथमेऽमृतेति विशेषणेन पौनरुक्त्यापत्तिः। शोभना धारा यस्यां सा सुधारा, आर्द्रया नक्षत्रविशेषेण सह वर्तत इति सार्द्रा। सुधारा चासौ सार्द्रा चेति तथा तामित्यर्थः। एतेन वृष्टौ पुष्टतरत्वं सूचितम्। आकृतिपक्षे स्निग्धत्वम्। कृतिपक्षे रसातलप्रवेशरूपमहाशपथलक्षणपातिव्रत्यवीररसघटितत्वेन सरसत्वं च। तस्मादितःपरं वैदेही सर्वात्मना स्तव्यैव सर्वैर्न तु तदुद्देशेन मयान्येन वा शोकः कार्य इति तात्पर्यम्॥

**इति प्रणयप्रकाशे तृतीयः प्रमोदः।**

## शान्तविलासः ।

एवमहो सकलजगन्नियन्तुरनन्तकल्याणगुणनिलयस्य भक्तानुग्रहार्थमेव प्रकटीकृतमायिकलीलाविग्रहस्य वस्तुतः संविदेकरसस्य स्वप्रकाशसत्यज्ञानानन्तानन्दाद्वैतकूटस्थब्रह्मरूपस्य भगवतः श्रीरामस्यापि यदा स्वधर्मैकरीत्या विषयान्भुञ्जतश्चक्रवर्तिनोऽपि यदा प्रेयसीवियोगेन विवेकेतरप्रतीकारविधुरः शोकव्यतिकर एव संपन्नस्तदा कैव कथा मादृशस्य पामरतरस्येति संजातविचाराङ्कुरः प्रथमोल्लासप्रस्तुतः कश्चिन्नरवरकुमारः सद्यः संपन्नवैराग्यभरः श्रुत्यन्तमहावाक्यैककरणकाशेषदृश्यशोकतरणद्वारीभूताद्वैतब्रह्मात्मैक्यसाक्षात्कारफलकद्वैतमिथ्यात्वानुभवस्य यावत्काम्यनिषिद्धवर्जनपूर्वकानेकजन्मानुष्ठितवेदैकनिष्ठापूर्वकनित्यादिस्ववर्णाश्रमकर्मपरितुष्टान्तर्याम्येकप्रसादासादितचित्तशुद्धिसत्वेऽपि 'यस्य देवे परा भक्तिः' इति, 'भक्त्या मामभिजानाति' इत्यादिश्रुतिस्मृतिप्रसिद्धभगवद्भक्त्येकसाध्यतया तदर्थं तमेव प्रार्थयते—

**विशालविषयावलीवलयलग्नदावानल-**
**प्रसृत्वरशिखावलीविकलितं मदीयं मनः ।**
**अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे**
**मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम् ॥ १ ॥**

विशालेति । इदम् । एतेन वर्तमानकालावच्छिन्नत्वं ध्वन्यते । तेन त्वरातिशयात्तापप्राचुर्यं सूच्यते । मदीयं मामकम् । मनोऽन्तःकरणं न तु चक्षुः । तेन प्रतिमाधनासक्त्या विवेकपौष्कल्यं द्योत्यते । मुकुन्देति । 'मुकुन्दो मुरमर्दनः' इत्यमराद्विष्णुरेव मुकुन्दस्तस्य यन्मुखं वदनं तदेव चन्दिरः । 'चिदि आह्लादने' इति धातोरुणादिप्रत्ययविशेषाच्चन्द्रस्तास्मिन्विषय इत्यर्थः । 'चन्दिरोऽनेकपे चन्द्रे' इति विश्वः । चिरं न तु क्षणम् । तेन प्रेमदार्ढ्यं व्यज्यते । चकोरायतां चकोरवदाचरतु । स यथा लौकिकराकाहिमकरे संसक्तो भवति तत्किरणामृतपानार्थमेवमिदमत्र ब्रह्मामृतपानार्थमासक्तं भवत्वित्यन्वयः । ननु लौकिकचन्द्रे कामिनीमुखचन्द्र एव वा किमिति न तथात्वं प्रार्थ्यत इत्याशङ्क्य तयोः क्षयिष्णुत्वात्सर्वांशिकशोभावत्त्वेऽनादरबीजे व्यञ्जयंस्तं विशिनष्टि—अमन्देत्याद्युत्तरार्धशेषेण । अमन्दमखण्डं मिलन्तीन्दिरा शोभा लक्ष्मीश्च यस्मिंस्तत्रेत्यर्थः । एतेन प्रकृतचन्द्रव्यतिरेकः सूचितः । निखिलेति । सर्वमधुरिमाधार इति यावत् । एवं च सकामैककल्पितमधुरिमाधारात्कामिनीवदनादसौ द्योत्यते । तेन प्रकृते नित्यनिरतिशयसौन्दर्यशालित्वं सकामनिष्कामसाधारणतृप्तिजनकदीप्त्यादिमालित्वं च क्रमात्सूच्यते । नन्वधिकारविरहे । शशकशिशोः सिंहशौर्यं प्रार्थनशतेनापि कथं घटेतेत्यतस्तद्विशिनष्टि—विशालेति । विशाला ब्रह्मलोकान्तत्वेन महती येयं विषयावली शब्दादीष्टविषयपङ्क्तिः सैव वलयाकारा । एतेन पलायनादिना प्रतीकारायोग्यत्वं ध्वनितम् । एतादृशी लग्ना संश्लिष्टा या दावानलस्य दावाग्नेः प्र-

त्वराणां 'प्रसत्वरः प्रसमरः' इत्यमरात्प्रसरणशीलानां शिखानां 'अर्चिहेतिः शिखास्त्रियाम्' इत्यपि तदुक्तेर्ज्वालानामावलिस्तया विकलितमित्यर्थः । अत्रैकविंशतिभक्तयभिन्नः शान्त एव रसः । इह रूपकव्यतिरेककाव्यलिङ्गलुप्तोपमादयोऽलंकाराः ॥

एवं व्यङ्ग्यमर्यादया भगवन्तं तदेकाकारस्वान्ततामभ्यर्थ्य परमसंतप्तत्वेन विलम्बासहिष्णुः साक्षादेवाथ तं प्रति तत्प्रतिबन्धमोचनपूर्वकसद्यस्तत्ताधायकं तत्कृपाकटाक्षच्छद्मभिवाञ्छति—

**अये जलधिनन्दिनीनयननीरजालम्बन-**
**ज्वलज्ज्वलनजित्वरज्वरभरत्वराभङ्गुरम् ।**
**प्रभातजलजोन्नमद्गरिमगर्वसर्वंकषै-**
**र्जगत्त्रितयलोचनैः शिशिरयाशु मां लोचनैः ॥ २ ॥**

अये इति । इदं हि कोमलामन्त्रण अयिवत् । जलधीति । जलधिः क्षीराब्धिस्तस्य नन्दिनी नन्दयति स्वयंवरेण भगवदेकपरायणतयानन्दयतीति तथा । न तु कन्यकामात्रमित्यर्थः । एतेन तस्यां पितृवंशोद्धारकत्वं ध्वन्यते । तस्या ये नयननीरजे नेत्रकमले तयोरालम्बनमिव निरुक्तस्वयंवरकाले तयोः सर्वत्र दोषदर्शनवशात्कामसमुद्रमज्जमानत्वेन निरालम्बनतायां संपद्यमानायां त्वमेवानन्तकल्याणगुणनिलयत्वेनात्मदृष्ट्या त्वसङ्गत्वेन चाश्रयीभूत इवेति तत्संबुद्धौ तथेत्यर्थः । एतेन स्वप्रार्थनीयशिशिरीकरणसामग्रीप्राचुर्यं शीतस्पर्शवत्त्वस्यावसाधारणलक्षणत्वेन तन्निधौ तदाधिक्यं तन्नन्दिन्यां ततोऽपि तदाधिक्यं तल्लोचनपद्मयोस्ततोऽपि तदाधिक्यं तदालम्बने त्वयि ततोऽपि तदाधिक्यं तु कैमुत्यसिद्धमिति द्योत्यते । मां लोचनैर्वारंवारं सदयमालोचनैः । सकरुणकटाक्षनिरीक्षणैरिति यावत् । एतेन कामनौत्कण्ठ्येन संतापाधिक्यं ध्वन्यते । तेन प्रार्थितेक्षणमात्रतापि सूच्यते । तत्रापि । आशु शीघ्रं न तु विलम्बेन । एवं च परमातुरत्वं सूचितम् । तेनावश्यनिरीक्षणीयत्वं सूच्यते । शिशिरय शीतलीकुर्विति संबन्धः । सानुकम्पसततापाङ्गावलोकनैस्त्रिविधतापसंतप्तं मां भो भगवन्नद्वैतात्मतत्त्वसाक्षात्काराविर्भावनेन 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति,' 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इति श्रुतिस्मृतिसिद्धामविद्याध्वंसलक्षणां जीवन्मुक्तिलक्षणां वा शान्तिं प्रति नयेत्याशयः । ननु कश्चिदविरक्तोऽपि द्रुतं मे मुक्तिं देहीतीश्वरमभ्यर्थयत्येव नैतावता स तत्पात्रताप(मे)तीत्याशङ्क्य तत्तावघटनायात्मानं विशिनष्टि—ज्वलदित्यादिद्वितीयपादेन । ज्वलन्दीप्यमानो नतूत्पन्नमात्रः । एतेनासह्यत्वं व्यज्यते । एतादृशो यो ज्वलनः । 'ज्वलनो हव्यवाहनः' इत्यमरादग्निस्तद्वज्जित्वरो जयशीलः परधर्षकः एतादृशो योऽयं ज्वरः 'किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्' इति श्रुतिसिद्धद्वैतानुभवज्वरः । सर्वदा संतापकत्वाज्ज्वर इव दुःखद इत्यर्थः । तस्य यो भर आधिक्यं तेन या त्वरा विलम्बासहिष्णुता तया भङ्गुरः क्षयिष्णुस्तमित्यर्थः ।

एतेनातितमकारुण्यास्पदत्वं व्यज्यते । ननु भवत्वेवमथापि मदवलोकनेषु तादृशतापहारकत्वादिकं कुतस्त्यमित्याशङ्क्य तानि विशिनष्टि—प्रभातेत्याद्युत्तरार्धशेषेण । प्रभाते यानि जलजानि कमलानि । एतेन विकसदवस्थत्वं द्योतितम् । तेषां य उन्नमन्नुच्चतमोऽपि भारान्नथ(य)मानः । एवं च गर्वे निरतिशयत्वं व्यज्यते । एतादृशो यो गर्वस्तस्य सर्वंकषाणि सर्वस्यापहारकाणि तैरित्यर्थः । एतेन शिशिरीकारविशारदत्वं ध्वनितम् । जगदिति । जगत्रितयं त्रैलोक्यं लोचयन्त्यालोचयन्तीति तथा तैरित्यर्थः । एवं च सर्वज्ञजन्यत्वेन स्वात्मज्ञानजननद्वारा स्वाज्ञानदलनदक्षत्वं द्योतितम् । अत्र प्रतीपविशेषः परिकरः परिकराङ्कुरादिश्चालंकारः ॥

एवं साक्षाद्भगवन्तं प्रति स्वाभीष्टं प्राथ्यार्थ 'परोक्षप्रिया इव हि देवाः' इति श्रुतेः परोक्षत्वेनापि तत्प्रार्थयते—स्मृतापीत्यादिद्वाभ्याम् ।

**स्मृतापि तरुणातपं करुणया हरन्ती नृणा-**
**मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् ।**
**कलिन्दनगनन्दिनीतटसुरद्रुमालम्बिनी**
**मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥ ३ ॥**

कापि स्वरूपतः 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतेरवाङ्मनसगम्येति यावत् । एतेन 'कृषिर्भूवाचकः शब्दः' इत्यादिश्रुतेः, 'कृष्णस्तु भगवान्स्वयम्' इत्यादि स्मृतेश्च श्रीकृष्णस्य पूर्णावतारत्वं द्योतितम् । अत एव कादम्बिनी भक्तानुग्रहार्थं गृहीतमायिकलीलानीलविग्रहनटनपाटवत्वेन नवनीरदपङ्क्तिरेवेत्यर्थः । 'कादम्बिनी मेघमाला' इत्यमरः । मदीयेति । ममेयं मदीया । मामकीति यावत् । एतादृशी या मतिर्बुद्धिस्तां चुम्बतीति तथा । मद्बुद्धिचुम्बनकर्त्री भवत्विति योजना । यद्वा निरुक्तश्रीकृष्णाख्यब्रह्मण आत्मत्वेन स्वबुद्धेरवश्यं तदाकारतासंभवादुक्तप्रार्थनानर्थक्यमेवेति यदि विभाव्यते तदा तत्संभवस्य याथार्थ्येऽपि तत्र दृश्यावच्छिन्नतदाकारत्वसत्वेन निरवच्छिन्नतदाकारताजन्यानन्दानुभवाभावादवच्छेदकमात्रव्युदसनस्यैव प्रार्थनीयत्वात् हर्षयति उन्मादयतीति वा व्युत्पत्त्या मदः कामस्तस्येयं मदीया सा चासौ मतिश्चेति प्राग्वदेव । एवं च कामबुद्धिचुम्बनकर्त्री भवत्विति प्रार्थना । एवं च बुद्धावुक्तभगवन्मूर्तावाविर्भूतायां सत्यां स तावन्मुमुक्षुं मां मनोरमास्मारकत्वादिना नैव पीडयिष्यतीति नान्तरीयकतयैव मन्मतिः स्वस्वरूपशान्तैव स्यादित्याशयः । तदुक्तं श्रीमत्सुरेश्वरवार्तिके—'अनात्मादर्शनेनैव परात्मानमुपास्महे' इति । ननु स्त्रियाः स्त्रीचुम्बनमनुचितमेवेति चेत्सत्यम् । शृङ्गारस्थायिभावाख्यरतिमूलकस्य तस्य तथात्वेऽपि 'रतिर्देवादिविषया व्यभिचारी तथाञ्चितः । भावः प्रोक्तः' इति काव्यप्रकाशकारिकोक्तदेवादिविषयकभावात्मकरतिमूलकस्य तस्य दुहितरि जनयित्र्याः स्वांशाधिक्येन पुत्रापेक्षयापि प्रेमाधिक्यस्य लोकादाववलोकितत्वेनेश्वरस्य समष्ट्युपहितत्वेन व्यष्टिभूताया मद्बुद्धेः कामबुद्धेर्वा जन्यत्वेन मातृदुहितृभावात्प्रेमोत्कर्षेण सुतरामुचितत्वात् ।

एतेन 'तस्यैवाहं ममैवासौ स एवाहम्' इति श्रीमन्मधुसूदनसरस्वतीभिर्गीताटीकोपोद्धाते सामान्येन वर्णितभक्तित्रैविध्यमध्ये द्वितीयभक्तिरियमिति ध्वन्यते। द्वितीयपक्षे तु तृतीयैव। ननु नहि प्रार्थनमात्रेणार्थसिद्धिः प्रायः क्वचिदपि दृष्टचरा, नापि निर्गुणायास्तस्याः सत्यपि मायिकोक्तलीलाविग्रहग्रहे संभवति संस्कारमन्तरा निरुक्तचुम्बनरचनावलम्बनं, नापि नीलरूपवत्त्वमात्रेणेन्द्रनीलादिवत्कादम्बिनीरूपकं सुकरमित्याशङ्क्य तस्यां निरुपचरितनिरुपमानुकम्पावत्त्वात्सहस्रावधिकगोपकन्यासौदामन्यावेष्टितत्वाद्वृन्दावनविहारित्वाच्चात्युचितमेवेदं मदुक्तमिति तद्विशेषणमिषेण त्रिपाद्या समाधत्ते—स्मृतापीत्यादिना। अपिना चिन्तामण्यादिवैलक्षण्यं द्योत्यते। प्रसिद्धघनावलीव्यतिरेकश्च। एवमभङ्गुरपदेनापि प्रसिद्धविद्युद्विलक्षणत्वम्। तथा कलिन्दनगनन्दिनी यमुना तत्तटे ये सुरद्रुमाः कल्पतरवस्तानालम्बत आश्रयत इति तथेत्यनेनापि प्रसिद्धघनावलीव्यतिरेकश्च। इह रूपकं व्यतिरेकश्चालंकारः॥

**कलिन्दनगनन्दिनीतटवनान्तरं भासय-**
**न्सदा पथि गतागतश्रमभरं हरन्प्राणिनाम्।**
**लतावलिशतावृतो मधुरया रुचा संभृतो**
**ममाशु हरतु श्रमानतितरां तमालद्रुमः॥ ४॥**

कलिन्देति। कलिन्दनगनन्दिनी यमुना तस्या यत्तटं तीरं तत्र यद्वृन्दावनादिवनं तस्य यदान्तरमन्तरालं मध्यवर्तिस्थलमित्यर्थः। भासयन्स्वकान्त्या दीपयन्। एतेन प्रसिद्धतमालव्यतिरेको द्योत्यते। तथा। सदा न तु मध्याह्न एव। तत्रापि ग्रीष्मादावेव। पथि संसारमार्गे। प्राणिनां जीवानाम्। गतागतेति। ऊर्ध्वाधोगमनागमनजन्यक्लेशातिशयमिति यावत्। एतेनापि स एव। तथा। लतेति। लतानां कनकलताकारकृशपीतसरलदीप्तगौराङ्गीणां गोपकन्यकानामित्यर्थः। या वलयः पङ्क्तयस्तासां शतानि तैरावृतो वलयित इत्यर्थः। एवं च रासक्रीडाकालिकत्वमपि व्यज्यते। पूर्वपद्यवत्। मधुरया चन्द्रिकयेवातिस्निग्धया न तु तिग्मयापि। रुचा कान्त्या संभृतः सम्यक् नैसर्गिककान्तिमत्वलक्षणेन। समीचीनत्वेनेत्यर्थः। भृतः परिपुष्टः। एतेनाप्यसावेव। एतादृशस्तमालद्रुमः श्यामवर्णवत्त्वसाधर्म्याच्छ्रीकृष्णाख्यः कश्चित्तातापिच्छ(तापिच्छ)वृक्ष इत्यर्थः। मम श्रमानाधिभौतिकादित्रिविधतापान्। आशु द्रुतम्। न तु विलम्बेन। एवं च स्वस्य परमौत्सुक्यं सूच्यते। अतितमां पुनस्तज्ज्ञानप्रागभावासमानकालीनां यथा स्यात्तथा हरत्विति संबंधः। एतेन सकार्यकाज्ञानध्वंसनाभ्यर्थनं ध्वन्यते। अत्राप्युक्तावेवालंकारौ॥

ननु 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति श्रुतेः, 'कर्मणैव साधुत्वं स्यादीश्वरस्य तु असङ्गो हि' इति श्रुतेः, 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः' इति स्मृतेश्च जीवन्मुक्त्यादावुदासीनत्वात्किं मत्प्रार्थनया, किंतु 'तमेतं वेदानुवचनेन' इत्यादि श्रुत्युक्तं परमेश्वरैकार्पणबुद्ध्या स्ववर्णाश्रमधर्मानुष्ठानमेव संपाद्य ततश्चित्तशुद्ध्यादिक्रमेण

ब्रह्माद्वैतात्मैक्यात्मतत्वविषयका बाधिता प्रतिबद्धसाक्षात्कारद्वारा सकार्यकतद्विषयक-मूलाज्ञानध्वंसोपलक्षिताद्वैतसच्चिदानन्दानन्तब्रह्मात्मरूपमुक्तिः संभवतीत्याशङ्क्य समाधत्ते—

**वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदा-**
**स्तां स्वप्नेऽपि न संस्मराम्यहमहंभावावृतो निस्त्रपः ।**
**इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-**
**स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तोऽपरः॥५॥**

वाचेति । भो नाथ अन्तर्यामिन् । एतेन निरुक्तकर्मादिप्रेरकत्वमपि च । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषत' इति श्रुत्युक्तमन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादित्यधिकरणन्यायेन त्वय्येवेति द्योत्यते । त्वं निर्मलया विशुद्धया वेदरूपिण्येत्यर्थः । न तु बौद्धादिप्रणीतया तद्विरुद्धपौरुष्या । एतेन भ्रमप्रमादादि दोषवैधुर्यं ध्वन्यते । अत एव । सुधेति । वाचा वाण्या । यां शिक्षां निरुक्तपूर्वोत्तरकाण्डोपदेशसरणिम् । एतेनावश्यादरणीयत्वं व्यज्यते । अदा मह्यं जीवाय दत्तवानसीत्यर्थः । तामहम् । अहंभावेति । देहाद्यहंतया व्याप्त इत्यर्थः । न च तत्रापि दुःखादुक्तशिक्षा स्मृतिः स्यादिति दुःखसहस्रसत्त्वेऽपि मम निर्लज्जत्वादि-त्याशयेनात्मानं पुनर्विशिनष्टि—निस्त्रप इति । अत एव स्वप्नेऽपि न संस्पृशामीत्यन्वयः । अत्र 'संस्मृरामि' इति पाठः साधीयान् । एवं तर्हि मया किं कर्तव्यमित्यत आह—इतीत्यादु-त्तरार्धेन । हे यदुपते इति साभिप्रायम् । उग्रसेनराज्यप्रदत्वात् । तस्मात्त्वया निरतिशय-दयानिधितया मदङ्गीकरणं स्वकीयत्वेन कृतमेवेतः परं कथं त्यक्तुमुचितं स्यादिति तात्प-र्यम् । 'आगोऽपराधः' इत्यमरः । स्वीयेषु हस्तपादादिवदतिममतास्पदेष्वित्यर्थः । 'स-खायौ' इति श्रुतेः स्वीयेषु संग्रहणं प्रसिद्धमेव । त्वत्तो मत्त इति पञ्चम्यौ । मत्त उन्मत्तः । अत्र काव्यलिङ्गं परिकरादिश्चालंकारः ॥

एवं निरुपमं भगवतः सदयतां स्वस्य चोन्मत्ततां संस्मृत्य कृतघ्नत्वपरिहारार्थमितःपरं त्वया तन्नामैव स्मर्तव्यमिति स्वयमेव स्वात्मानं सनिर्वेदपरमसाधनसर्वस्वत्वेनोपदिशति—

**पातालं व्रज याहि वा सुरपुरीमारोह मेरोः शिरः**
**पारावारपरम्परास्तर तथाप्याशा न शान्तास्तव ।**
**आधिव्याधिजरापराहत यदि क्षेमं निजं वाञ्छसि**
**श्रीकृष्णेति रसायनं रसय रे शून्यैः किमन्यैः श्रमैः ॥६॥**

पातालं व्रजेति । ननु किं नाम स्मरणेन, कर्मैवाग्निहोत्रादिकं कर्तव्यं, ततश्च दिव्या-द्येकविंशतिस्वर्गसुखं भोक्तव्यं, पुनरपि मनुष्यशरीरे जाते तथैवेति स्रगादिविषयसुखेतरः कोऽपि न पुमर्थ इति मीमांसकमतं प्रत्याचक्षाण इव स्वजीवं तदवलम्बित्वान्नीचतयाभि-

मुखीकरोति—रे इति । न च स्वर्गादावाशानुपशान्तिः शान्तिर्वा केन दृष्टा, सांप्रतं त्वहं निरुक्तविषयसंभोगतः कृतार्थ एव सुखी संवृत्तोऽस्मीति वाच्यम् । अत्रापि दुःखभूयिष्ठत्वस्यैव त्वयि दृष्टत्वादित्याशयेन तं विशिनष्टि—आधीति । 'पुंस्याधिर्मानसी व्यथा' इत्यमरादाधिर्मरणचिन्तादिर्मनोव्यथा । व्याधिः कफवातपित्तवैषम्यजन्यः स्थूलशरीरविकारः । तथा जरा वार्धक्यजन्यस्तत्परिणामः । ताभिः पराहतोऽभिभूतस्तत्संबुद्धौ तथेत्यर्थः । एतेन प्रत्यक्षं निर्वेदनिदानं द्योतितम् । त्वं यदि निजं न त्वन्यदीयम् । तेनौदासीन्यव्युदासः सूचितः । क्षेमं 'कुशलं क्षेममस्त्रियाम्' इत्यमरात्कल्याणम् । वाञ्छसि तर्हि । श्रीकृष्णेति । श्रीकृष्णनामस्मृतिरूपमित्यर्थः । रसायनं रसस्य पारदस्यायनं त्रैलोक्यचिन्तामण्यादिरूपं स्थानमिति यावत् । रसय विरक्तिपथ्याशनशान्त्यनुपानाभ्यां सह समास्वादयेति संबन्धः । अन्यैर्निरुक्तोपायेतरैः शून्यैर्निष्फलैः श्रमैर्भगवदनर्पितकाम्याग्निहोत्रादिधर्मैः किं न किमपि प्रयोजनमिति योजना । तदुक्तं भागवते—'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥' इति । अत एव श्रूयते—'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥' इति । एतदेव विशदयन्नन्येषां कर्मणां प्रतिज्ञातं शून्यैरित्यादिना नैष्फल्यं हेतूक्त्या द्रढयति—पातालमित्यादिपूर्वार्धेन । रे आधीत्यादि प्राग्वदेव । त्वं यद्यपि पातालमतलादिसप्तबिलस्वर्गस्थलमित्यर्थः । व्रज गच्छ । तथा । सुरेति । अमरावतीमित्यर्थः । याहि गच्छ । तथा । मेरोर्हेमाद्रेः शिरो मस्तकम् । ब्रह्मलोकमिति यावत् । उपलक्षणमिदं भूरादिसप्तदिव्यस्वर्गाणाम् । आरोहाधिरोहेति यावत् । तथा । पारावारेति । 'पारावारः सरित्पतिः' इत्यमरात्पारावाराणां क्षीरोदादिशुद्धोदान्तानां समुद्राणां याः परम्पराः पङ्क्तयस्ता इत्यर्थः । भरतवर्षेतरजम्बुद्वीपादिसप्तद्वीपरूपभौमस्वर्गसरणीः कर्मीभूता इति यावत् । तर समुद्रतरणोपलक्षिततत्तत्स्थलजन्मभिः प्राप्नुहीत्यर्थः । तथापि एवं सत्यपि । तव आशाः स्वेष्टविषयविषयकाभिलाषा इत्यर्थः । शान्ता उपशान्ताः न नैव भविष्यन्तीत्यन्वयः । तस्माद्युक्तमेवोक्तं श्रीकृष्णस्मरणेतरसर्वकर्मणां नैष्फल्यमित्याकूतम् । अत्र रूपकाधिकः सकलः प्राक्तन एवालंकारः ॥

एवमु[प]दिष्टमपि युक्त्या द्रढितमपि भगवन्नामस्मरणं साधनसर्वस्वत्वेन कदाचिदनन्तजन्मसंपादितकर्मवासनासहस्रपारतन्त्र्येणाश्रद्धेयतया संभाव्य पुनः सशपथं स्वानुभवं दृष्ट्वा स्थूणानिखननन्यायेन चिन्तामण्यादिवन्नानाविधवाञ्छितपूरकत्वमपि तस्य कथयंस्तद्द्रढयति—मृद्वीकेत्यादिद्वाभ्याम् ।

**मृद्वीका रसिता सिता समशिता स्फीतं निपीतं पयः**
**स्वर्यातेन सुधाप्यधायि कतिधा रम्भाधरः खण्डितः ।**
**सत्यं ब्रूहि मदीय जीव भवता भूयो भवे भ्राम्यता**
**कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः ॥ ७ ॥**

हे मदीय जीव। एवं च निरुक्तविशालविषयावलीत्यादिपद्यचतुष्टयमात्रानुष्ठितभगवद्भक्तिमहिम्नैव सद्यः स्वस्य सच्चिदानन्दाद्वैतब्रह्मात्मैकप्रत्यक्कूटस्थस्वरूपदङ्मात्रतत्त्वविषयकाप्रतिबद्धसाक्षात्कारोदयपूर्वकसकलदृश्यबाधानुभवः संपन्न इति सूचितम्। अन्यथा जीवस्य स्वपार्थक्यानुभवासंभवात्। त्वया। मृद्वीका 'मृद्वीका गोस्तनी द्राक्षा' इत्यमराद्गोस्तनाकारदीर्घद्राक्षाजातिविशेषः। रसितास्वादिता। इह लोक इति शेषः। तथा सिता शर्करा समशिताकण्ठं भक्षिता। तथा स्फीतं विपुलं पयो दुग्धं निपीतं प्राशितम्। एवं स्वर्यातेन स्वर्गं कदाचिद्गतेन। सुधाप्यमृतमपि। अधायि 'धेट् पाने' इति स्मरणात्प्राशितमित्यर्थः। एवं कतिधा बहुवारं संसारस्यानादित्वाद्युक्तमेवेदम्। रम्भेति। खण्डितो रतिरभसवशाच्चुम्बनावसरे कदाचिद्दन्तेनापि क्षत इति यावत्। एतेनैहिकपारत्रिकयावन्मधुरद्रव्यास्वादानुभवाभवशङ्काशान्तिः सूचिता। अस्त्वेवम्, किं तेनेत्यत्राह—सत्यमित्याद्युत्तरार्धशेषेण। भवता त्वया। भवे संसारे भूयो वारंवारम्। भ्राम्यता घरटी(घटी)यन्त्रन्यायेनोर्ध्वाधः पर्यावर्तता सतेत्यर्थः। एतेन जीवे सर्वज्ञत्वाभावात्कथं मया कथनीयमस्ति नास्तीत्यन्यतरकोटिकमप्युत्तरमिति परास्तम्। कृष्णेत्यक्षरयोः। कृष्ण इति संबुद्ध्यन्तवर्णयोरपीत्यर्थः। अयं प्रत्यक्षः। एतेन सद्यःसमुच्चारितवर्णालौकिकरसास्वादतृप्तिजन्यत्वमुद्गारे द्योत्यते। मधुरिमेति। मधुरिम्णो माधुर्यस्योद्गारस्तत्स्युत्तरभाविसशब्दोदानोपप्राणीभूतदेवदत्ताख्यान्तरकाण्ठवायुव्यापार इत्यर्थः। 'उदारः' इति त्वपपाठ एव। मधुरिम्णो महत्वस्योक्तविशेषणमन्तरापि तद्भिन्नपदैरेव सिद्धत्वात्। क्वचित्कस्मिंश्चिदपि देशे काले वेति यावत्। एतेन तस्य लोकोत्तरत्वं ध्वन्यते। लक्षित एतल्लक्षणलक्ष्यतयानुभूतोऽभूदित्यर्थः। इति सत्यं न तु स्तावकम्। ब्रूहि वदेति योजना। तस्मान्निरुपममेव भगवन्नामस्मरणवैभवमिति भावः। इह प्रतीपविशेषोऽलंकारः॥

**वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं**
**मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः।**
**क्रूरक्लेशमहीरुहामुरुभरज्वालाजटालः शिखी**
**द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम्॥ ८॥**

वज्रमिति। 'भृञ् धारणपोषणयोः' इति धातोर्महीं बिभ्रति ते तथा पृथ्वीधारकाः पर्वता इत्यर्थः। पापान्येवेत्यादि स्पष्टमेव। भवेति। भवः संसार एव गदो रोगः। 'रोगव्याधिगदामयाः' इत्यमरः। यद्वा भवं जन्म आरभ्य यो गदः। जन्मरोगस्य दुर्निरसत्वात्। तस्याप्युद्रेकोऽतिरेकः। आधिक्यमिति यावत्। मिथ्येति। आरोपिताविद्येत्यर्थः। सैव निशेत्यादिसरलमेव। तिग्मांशुः सूर्यः। मह्यां रुहन्तीति महीरुहास्तेषां वृक्षाणामित्यर्थः। 'शिखावानाशुशुक्षणिः' इत्यमराच्छिखी अग्निः। निर्वृतीति। निर्गता वृतिरावरणं यस्याः सकाशात्सा। अद्वैतचितिरूपमुक्तिरेव निर्वृत्तिः। शेषमतिरोहितमेव। एवं च भगवन्नाम्नः कृष्णेत्यात्मनः सकलपापाजन्मरोगसका[का]र्यकाविद्याधिभौतिकाद्यखिलदुःखमोक्षप्रतिब-

न्धध्वंसकत्वेन सर्वपुमर्थदातृत्वं ध्वन्यते । तस्मात्कलौ बुभुत्सुभिर्नित्याद्यविरोधेन दशविध-नामापराधविधुरं तदेव स्मर्तव्यं सततमिति तत्त्वम् । अत्र रूपकमलंकारः ॥

अथ 'गच्छ गच्छसि चेत्कान्त तत्रैव स्यान्निर्मम' इत्यादिवद्विरोधिलक्षणया स्वचेतः प्रत्येव भगवद्ध्यानमाक्षेपालंकारेणोपदिशति—

**रे चेतः कथयामि ते हितमिदं वृन्दावने चारय-**
**न्वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया ।**
**सौन्दर्यामृतमुद्गिरद्भिरभितः संमोह्य मन्दस्मितै-**
**रेष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति ॥ ९ ॥**

रे चेत इति । किं तद्धितमित्यत आह—वृन्दावन इत्यादिपूर्वार्धशेषेण । कोऽपि । एवं चावाङ्मनसगोचरत्वेन तस्याद्वैतब्रह्मैकरूपत्वं द्योत्यते । तत्रापि भक्तानुग्रहार्थं मायिकलीलाविग्रहनटनात् । नवेति । नूतनघटसंनिभ इत्यर्थः । यद्वा नवानां श्रवणादिनवसंख्याकानां भक्तीनामम्बु जीवनं 'आपो मयः प्राणः' इति श्रुतेः प्राणनमिति यावत् । ददाति तादृशी निभा कान्तिर्यस्येत्यर्थः । एवं च तद्भक्तिरेव कार्येति तात्पर्यम् । वृन्दावने । एतेन भक्तपारवश्यं सूच्यते । वृन्दाया अपि स्वपतिरूपेण ब्रह्मैव भजन्त्याः परमभक्तत्वात् । गवां वृन्दं चारयन् । धेनुसंघचारयितेत्यर्थः । यद्वा वृन्दस्य देवर्षिपितृमनुष्यतिर्यक्संघस्यावनमग्निहोत्रादिना तत्तदिष्टप्रदानेन रक्षणं यत्र तस्मिन्नित्यर्थः । मनुष्याधिकारत्वाच्छास्त्रस्येति मनुष्यशरीर एवेति यावत् । गवां वागादीन्द्रियाणाम् । वृन्दं संघं चारयन्नयस्कान्तादिवत्प्रेरयन्नित्यर्थः । एतेन तस्य पारोक्ष्यं प्रत्युक्तम् । एतादृशोऽस्ति स त्वया बन्धुर्न कार्य इत्यन्वयः । तत्र हेतुः सौन्दर्येत्याद्युत्तरार्धेन । एष त्वां सौन्दर्येणामृतं कैवल्यमुद्गिरद्भिः । एतादृशैः । मन्देति । मृदुहासैः । यद्वा तत्सदृशैरपरोक्षज्ञानौ(नो)त्तरकालिकस्वाकारवृत्तिविशेषैरित्यर्थः । संमोह्य वशीकृत्य त्वां तव वल्लभान्विषयांश्च । आशु शीघ्रम् । क्षयं नाशं नेष्यतीति संबन्धः । तस्माद्धितेच्छुना भवतेतः परं तत्सख्यमेव विधेयमित्याशयः ॥

एवं वाणीमप्युपदिशति—

**अव्याख्येयां वितरति परां प्रीतिमन्तर्निमग्ना**
**कण्ठे लग्ना हरति नितरां यान्तरध्वान्तजालम् ।**
**तां द्राक्षौघैरपि बहुमतां माधुरीमुद्गिरन्तीं**
**कृष्णेत्याख्यां कथय रसने यद्यसि त्वं रसज्ञा ॥ १० ॥**

अव्याख्येयामिति । हे रसने, 'रसज्ञा रसना जिह्वा' इत्यमरादयि जिह्वे इत्यर्थः । यदि त्वं रसज्ञासि तर्हि तां कृष्णेत्याख्यां कथयेति योजना । अहो यत्कथनमात्रेण मद्रसज्ञत्वं

प्रख्यातं भवति का सा वैतादृशी लोकोत्तररसमयीत्यत्राह पूर्वार्धेन । या कृष्णेत्याख्या । अन्तश्चेतसि निमग्ना मनसैव पराख्यवागात्मना परिणे(ण)तेनोच्चारिता सतीत्यर्थः । पराम् । अत एव । अव्याख्येयां वागाद्यगोचरब्रह्माद्वैतविषयत्वेनानिरुच्यामित्यर्थः । एतादृशीं प्रीतिं परितुष्टिं वितरति ददातीत्यर्थः । एवं च मानसनामस्मरणस्याद्वैतात्मानन्द एव फलमिति द्योत्यते । तथा कण्ठे लग्ना मध्यमाख्यया वाचोच्चारिता सतीति यावत् । नितरां निरवशेषं न तु यत्किंचित् । तत्रापि । आन्तरेति । आन्तरमन्तर्भवं मानसमित्यर्थः । एतादृशं ध्वान्तजालमविद्यातमःपटलमित्यर्थः । हरति ध्वंसयतीत्यर्थः । इदमप्युच्चारणं योगैकसाध्यमतः सुगमोपायाभिधित्सया मया प्रथमं वैखर्यैनिधात्वमेव प्रार्थितासीत्याशयेन तस्या अपि तत्र लोभं जनयितुं निरुक्ताख्यां विशिनष्टि द्राक्षेत्याद्यवशिष्टेन । द्राक्षाणां मृद्वीकादियावत्तदुत्तमजातीनां य ओघाः संगा(घा)स्तैरित्यर्थः । अपिना लोकोत्तरमाधुर्यवत्त्वं तेषु ध्वन्यते । बहुमतामादृतामित्यर्थः । एतादृशीं माधुरीं मधुरतामुद्गिरन्तीं तृप्तिपूर्वकं विकासयन्तीमिति यावत् । तस्मात्त्वयावश्यमियं सेवनीयेत्याशयः । गम्योत्प्रेक्षालंकारः ॥

ननु किमेवं वागादीन्द्रियोपदेशेन तेषां त्वदेकपारतन्त्र्याद्यदि त्वय्येव 'परोपदेशसमये सन्ति सर्वेऽपि पण्डिताः । तदनुष्ठानसमये मुनयोऽपि न पण्डिताः ॥' इति न्यायेन केवलमुपदेशकौशलमेव तर्हि तेषामपि कूपकलशजलन्यायेन कथं नामोपदेशसहस्रेऽपि तत्र प्रवृत्तिः स्यादित्याशङ्क्य स्वस्यापि नैसर्गिकभगवन्मात्रप्रेमपरत्वं संस्फुटयति—

**सन्त्येवास्मिञ्जगति बहवः पक्षिणो रम्यरूपा-**
**स्तेषां मध्ये मम तु महती वासना चातकेषु ।**
**यैरूर्ध्वाक्षैरथ निजसखं नीरदं स्मारयद्भि-**
**श्चित्तारूढं भवति किमपि ब्रह्म कृष्णाभिधानम् ॥ ११ ॥**

सन्त्येवेति । वासना प्रीतिमूलीभूता संस्कारनाम्नी मनोनिष्ठा भावनेत्यर्थः । अस्त्वेवं भावत्की प्रीतिश्चातकेषु किं ततः प्रकृत इति शङ्कां शमयन्नुक्तप्रीतौ हेतुं द्योतयति यैरित्याद्युत्तरार्धेन । अथ ऊर्ध्वनेत्रत्वानन्तरम् । निजेति । जीवनदत्त्वेन स्वप्राणीभूतमित्यर्थः । उक्तं हि—'समप्राणः सखा मतः' इति । किमप्यवाङ्मनसगोचरमित्यर्थः । एवं च नीरदस्मरणेन तद्वर्णस्य श्रीकृष्णस्यापि स्मृतिः संभवतीति परम्परया तत्प्रयोजकत्वेन चातकेषु हंसादीनप्यनादृत्य मत्प्रीतिरुचितैवेति भावः । एतेन भगवद्विषयकं नैसर्गिकं प्रेम व्यज्यते । शिष्टं तु स्पष्टमेव । इह स्मृतिरलंकारः काव्यलिङ्गं स्वभावोक्तिश्च ॥

नन्वथापि स तु तत्रापि ममेव परोक्ष एवेति चेन्न । नित्यापरोक्षरूपस्य तस्य परोक्षकल्पनाया व्यामोहैकमूलकत्वात्सर्वदृश्यजालस्य तन्मात्रप्रकाशेन भासमानत्वाच्चेत्यभिसंधाय भेदवादिनः समुपहसति—

**विष्वग्रुच्या भुवनमभितो भासते यस्य भासा**
**सर्वेषामप्यहमिति च यत्प्रत्ययालम्बनं यः ।**

**तं पृच्छन्ति स्वहृदयतलावेदिनो विष्णुमन्या-**

**नन्य।योऽयं शिव शिव नृणां केन वा वर्णनीयः ॥१२॥**

विष्वगिति । यस्य व्यापकस्य परब्रह्मरूपस्य श्रीविष्णोरित्यर्थः । विष्वग्रुच्या । विष्वक् समन्ततः सर्वदेशकालाद्यवच्छेदेनेत्यर्थः । रुचिः सर्वजीवानां प्रीतिर्यस्यां सा तथा तये-त्यर्थः । 'रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोः' इति विश्वः । तत्तद्वस्तुविषयकज्ञानेऽभि-लाषो हि सर्वेषां जीवानामवश्यं वाच्यः । अन्यथोपादेये स्वेष्टविषये प्रवृत्तिरनुपादेये स्वा-निष्टविषये निवृत्तिश्च तत्तज्ज्ञानमन्तरा कथं भूयात् । तस्मादुक्तव्याख्यानं युक्तमेव । एवं दीप्तिवाचिभ्यां रुचिभाःपदाभ्यां द्विरुक्तिरपि प्रत्युक्ता । एतादृश्या भासा स्वरूपभूतस्व-प्रकाशचितेत्यर्थः । तथा च श्रूयते—'तमेव भान्तमनु भाति सर्वम् । तस्य भासा सर्वमिदं विभाति' इति । एतेनेदंप्रत्ययालम्बनत्वेन तस्य नित्यापरोक्षत्वं द्योतितम् । भुवनं वि-श्वम् । अभितः सर्वावस्थावच्छेदेन । भासत इति संबन्धः । एवमहंप्रत्ययालम्बनत्वेनापि तस्य नित्यप्रत्यक्षत्वं संक्षिपति—सर्वेषामपीति द्वितीयपादेन । यद्यस्मात्कारणात् । हेतुरयं प्रागपि योज्यः । सर्वेषामपि संपूर्णजीवानामपि यः पूर्वोक्तविष्णुः । अहमिति प्रत्ययालम्बन-महंवृत्तिस्फुरणाश्रयः । अस्तीति शेषः । चः समुच्चये । तमपि विष्णुं व्यापकं यावद्दृश्यप्र-काशकं परमात्मानमित्यर्थः । स्वेति । स्वहृदयानि स्वान्तःकरणानि । 'अहंवृत्तिरिदंवृत्ति-रित्यन्तःकरणं द्विधा । विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत् ॥' इत्यभियुक्तोक्तेः प्रागुक्त-रीत्या बुद्धिमनोरूपाणीति यावत् । तेषां यत्तलं 'तलं स्वरूपाधारयोः' इति विश्वाद्वास्त-विकं रूपं निरुक्तरीतिकालम्बनं(न)विधया आधारो वा अद्वैतात्मप्रकाशस्तं न विदन्ति नैव जानन्तीति तथा । अज्ञानिन इत्यर्थः । अन्यान्ब्रह्मविदः पृच्छन्ति त्वया विष्णुर्दृष्ट-श्चेदस्मान्संदर्शयेत्याक्षिपन्ति । अतः । शिवशिवेति खेदे । 'योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥' इत्युक्तरी[त्या] दृक्पापिष्ठस्मृत्या प्राय-श्चित्ते चायं नृणामन्यायः केन वर्णनीयः । लोकोत्तरत्वान्न केनापीत्यन्वयः । एवं चात्युप-हासः सूचितः । इह काव्यलिङ्गमेवालंकारः ॥

ततः किमेवमन्योपहासेनेति संजातानुतापः स्वचेतः प्रत्येव समुपदिशति—

**सेवायां यदि साभिलाषमसि रे लक्ष्मीपतिः सेव्यतां**

**चिन्तायामसि सस्पृहं यदि तदा चक्रायुधश्चिन्त्यताम् ।**

**आलापं यदि काङ्क्षसि स्मररिपोर्गाथा तदालाप्यतां**

**स्वापं वाञ्छसि चेन्निरर्गलसुखे चेतः सुखं सुप्यताम् ॥१३॥**

सेवायामिति । रे चेतः, त्वं प्राक्तन संस्कारवशादिति सर्वत्र बोध्यम् । यदि सेवायां साभिलाषमसि तर्हि त्वया लक्ष्मीपतिरेव सेव्यतां तत एव सर्वसंपल्लाभसंभवादिति भावः ।

एवं चिन्तायामित्याद्युत्तरत्रापि बोध्यम् । गजेन्द्रादेश्चिन्तोपशमस्य तादृशोपाध्यवच्छिन्नात्मनः सकाशादेव दृष्टत्वादित्याशयः । आलापं 'स्यादाभाषणमालापः' इत्यमरात्संभाषणमित्यर्थः । स्मररिपोर्मदनान्तकस्य श्रीशङ्करस्यैवेत्यर्थः । गाथा व्यासादिग्रथितकथेत्यर्थः । आलाप्यतामिति छेदः । निर्गलेति । निर्गतमर्गलमिव 'तद्विष्कम्भोऽर्गलं न ना' इत्यमराद्द्वाररोधककाष्ठविशेषमिव क्षयोपायाभावात्प्रतिरोधकं यत्र तच्च तत्सुखं चेति तस्मिन्नद्वैतब्रह्मात्मैक्यसुख इत्यर्थः । एतेन विषयसुखव्युदासः सूचितः । अत्र स्मररिपुपदेन वक्तुरभेदभक्तत्वं व्यज्यते । अत एवोक्तं मदीयायामद्वैतसुधायाम्—'कृष्णं पश्यन्तु मां केचित्केचिद्वा नीललोहितम् । रज्जुसर्पवदेतेन कूटस्थस्य न मे क्षतिः ॥' इति । कृष्णभक्तिचन्द्रिकायामपि—'उभयोरेका प्रकृतिः प्रत्ययभेदाच्च भिन्नवद्भाति । कलयति कश्चिन्मूढो हरिहरभेदं विना शास्त्रम् ॥' इति । एवं चेह जाग्रदादिविक्षेपे राजरिपुरमणीनां सेवनाचिन्तनभाषणैरनुक्रमात्सुप्त्यादिलये च वृथायुःक्षयेण पुरुषार्थाभावो द्योत्यते । तथा चरणचतुष्टयेऽर्थार्थ्यार्तजिज्ञासुज्ञानिकर्तृक(का)श्चतुर्विधा भक्तयो ध्वन्यन्ते । अत्र परिकरपरिकराङ्कुरकाव्यलिङ्गान्यलंकाराः ॥

अथ चरमचरणसूचनसंजातस्मरणात्साधून्संवर्णयति—

**भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषो**
**बलादुन्मूल्य द्राङ्निगडमविवेकव्यतिकरम् ।**
**विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्यशिशिरे**
**विगाहन्ते दूरीकृतकलुषमार्याः करटिनः ॥ १४ ॥**

भवेति । भवः संसारः स एव ग्रीष्मातपनिवहो ग्रीष्मर्तुकालिकालोकनिकरस्तेन सम्यक् न तु यत्किंचित्तप्तं संतप्तं वपुः शरीरं येषां ते तथा । एतेन विरागसामग्रीपौष्कल्यं व्यज्यते । अत एव । बलादिति । द्राक् 'द्राग्झटित्यञ्जसाह्नाय सपदि द्रुते' इत्यमराच्छीघ्रमेव न तु विलम्बेन । तेन परमविरागः सूचितः । बलात् 'नास्ति योगसमं बलम्' इति वचनाद्योगाभ्यासरूपसामर्थ्याद्धेतोरित्यर्थः । श्रवणादिसामर्थ्येन वा । अविवेकेति । अविवेकस्याविचारस्य व्यतिकर आधिक्यं येन तं मूलाज्ञानलक्षणमित्यर्थः । निगडं लोहशृङ्खलविशेषम् । उन्मूल्य भुङ्क्त्वे(भङ्क्त्वे)त्यर्थः । एतेनाप्रतिबद्धाद्वैतब्रह्मात्मैक्यसाक्षात्कारपर्यन्तं विचारपरिपाकः सूचितः । ततः विशुद्धेऽविद्यादिदृश्यमलशून्ये पक्षे निष्पङ्के । नैराश्येति । 'सोऽश्नुते सर्वान्कामान्सह' इति श्रुतेर्ब्रह्मविद्यया निखिलानन्दनाडीभूतब्रह्मानन्दाम्भोधि मग्नतानान्तरीयकत्वविध्वस्ताखिलविषयानन्दावाप्त्यभिलाषकत्वान्निराशत्वशीतल इत्यर्थः । एतेन जीवन्मुक्तिः सूचिता । एतादृशे च । अस्मिन्नित्यापरोक्षे । आत्मेति । आत्माभिन्नं यदमृतं 'श्रेयो निःश्रेयसामृतम्' इत्यमरात्कैवल्यं तदेव सरः कासारस्तस्मिन्नित्यर्थः । आर्याः पूज्या ब्रह्मज्ञा इत्यर्थः । करटिनो गजेन्द्राः । दूरीकृतेति । दूरीकृतं निरस्तं कलुषं संचित-

क्रियमाणकर्मजातं पक्षे पङ्कजातं च यथा स्यात्तथेत्यर्थः । विगाहन्ते प्रविशन्ति स्वैरं विहरन्तीति योजना । अत्र रूपककाव्यलिङ्गेऽलंकारौ ॥

यद्येवमात्मविवेकसाध्या मुक्तिस्तर्हि कथं शास्त्रे 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिनाग्निहोत्रादिकर्मणामेव मुक्तिसाधनत्वमुक्तं, कथं वा 'नास्ति सांख्यसमं ज्ञानम् ॥' इत्यादिना सांख्यादिशास्त्राणामपि ज्ञानसाधनत्वमभिहितं, कथं वा 'सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति' इत्यादिना प्रयागस्नानस्यापि तत्साधनता प्रतिपादितेति चेद्बाढम् । अक्षय्यशब्देन यत्किंचिदापेक्षिकाक्षयत्वस्यैव 'प्लवा ह्येते अदृढा यज्ञरूपा' इत्यादि सोपपत्तिकश्रुत्यन्तरविरोधात्तच्छ्रुतिपूर्वापरतात्पर्यपर्यालोचनाच्च विवक्षितत्वं वाच्यम् । एवं सांख्यशब्देन 'यत्सांख्यैः प्राप्यते स्थानम्' इत्यादिश्रीमद्भगवद्गीतावाक्यस्थभाष्यरीत्याद्वैतात्मसाक्षात्कारस्यैव तत्त्वं वक्तव्यम् । सितासितश्रुतिस्तु कण्ठत एव स्वर्गं वक्तीति नैव चोदनाविषयः । तस्मादेतादृशाभिप्रायानभिज्ञत्वेन ये तत्र प्रवृत्तास्ते भ्रान्ता एवेति स्वचेत एव प्रतिबोधयति—

**बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते कर्मपाशा-**

**नन्तः शान्त्यै मुनिशतमतानल्पचिन्तां भजन्ते ।**

**तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः**

**सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥ १९ ॥**

बन्धोन्मुक्त्यै इति । मखो यज्ञो मुखमिव मुख्यो येषु तानित्यर्थः । एतादृशान् । कर्मेति । कर्माण्येव बन्धकत्वात्पाशास्तानित्यर्थः । न हि बन्धकैः पाशैर्बन्धोन्मुक्तिः स्वप्नेऽपि संभाव्यते । एवमग्रेऽपि । अन्तरिति । चित्तशान्त्यर्थमित्यर्थः । मुनीति । मुनीनां जैमिन्यादिमहर्षीणां यानि शतानि तेषां मतानि सिद्धान्तजातानि तेषां यानल्पा विपुला 'न तु श्रुतिमतस्तर्कोऽनुसंधीयताम्' इति श्रीमद्भाष्यकारचरणाब्जवचनाद्यत्किंचिदेतादृशी या चिन्ता तामित्यर्थः । अशुभेति । दुःखाब्धेरित्यर्थः । पारं परतीरम् । आरोढुकामा आरोढुमधिगन्तुं कामोऽभिलाषो येषां ते तथा । अत्र सर्वत्र जना इत्यध्याहारो बोध्यः । अवशिष्टं तु स्पष्टमेव । विचित्रालंकारः । तदुक्तम्—'विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेच्छया । नमन्ति सन्तस्त्रैलोक्यादपि लब्ध(ब्धुं) समुन्नतिम् ॥' इति ॥

अथ पुनः संजातानुतापः किमनया भ्रान्तचर्याविचारणया ममेत्यतः श्रीविष्णुचिन्तनमेव सततं ममास्त्वित्यभिलषति—

**प्रथमं चुम्बितचरणा जङ्घाजानूरुनाभिचक्राणि ।**

**आलिङ्ग्य भावना मे खेलतु विष्णोर्मुखाब्जशोभायाम् ॥ १६ ॥**

प्रथममिति । मे भावना चित्तवृत्तिः । प्रथमं पूर्वम् । चुम्बितेति । चुम्बितौ चरणौ

यया सा तथा । विष्णोरित्यार्थिकम् । एतेन 'संचिन्तयेद्भगवतश्चरणारविन्दम्' इत्यादि-श्रीमद्भागवतोक्ता भगवद्ध्यानसरणिश्चरणाब्जमारभ्यैवेति द्योतितम् । ततः । जङ्घेति । जङ्घे च जानुनी चोरू च नाभिचक्रं चेति तथा । नाभिहृदयानीति पाठस्तु सरल एव । अत्र 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति सूत्रेणैकवद्भावे प्राप्तेऽपि तदकरणं प्रकृतेऽद्वैत-ब्रह्ममात्ररूपत्वेन प्राणित्वाभावाशयादेवेति बोध्यम् । तान्यालिङ्ग्य विष्णोर्मुखाब्जशोभायां खेलत्विति संबन्धः । एतेन प्रागुपभुक्तस्वकान्तालिङ्गनचुम्बनखेलनस्मृतिप्रशान्त्युपायत्वमत्र व्यज्यते । भावनाया अपि स्त्रीत्वात्प्रकृते तत्समुचितमेव चुम्बनादीति सूच्यते । एवं चेह समासोक्तिरलंकारः ॥

एवं कृतेऽप्यभिलाषे हृदि निरुक्तकामवासनादिवशाज्झटिति भगवन्मूर्त्यप्रतिभासेन खिन्नमिवात्मानं ब्रह्मावबोधसंस्कारेण तादृशं तं पृथक्त्वेनानुसंधाय स्वयं दृश्यात्रः सन्सा-न्त्वयन्निव भगवत्स्मृतिमाहात्म्यातिशयं व्यनक्ति—

**तरणोपायमपश्यन्नपि मामक जीव ताम्यसि कुतस्त्वम् ।**
**चेतःसरणावस्यां किं नागन्ता कदापि नन्दसुतः ॥ १७ ॥**

तरणोपायमिति । ताम्यसि संतप्तो भवसीत्यर्थः । चेतःसरणौ चित्तपद्धत्याम् । तेन तदागमनयोग्यत्वं ध्वन्यते । रूपककाव्यलिङ्गेऽलंकारौ । अन्यत्तु सरलमेव ॥

एवं विषयसंस्काराणामपि भगवद्ध्यानप्रतिबन्धकत्वेऽनुभूतेऽथ सर्वेषामिष्टविषयाणां संप-देकमूलकत्वेन तदभावमेवाशास्ते—

**श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटा-**
**मदभ्राम्यद्भृङ्गावलिमधुरझङ्कारसुभगाः ।**
**निमग्नानां यासु द्रविणरसपर्याकुलदृशां**
**सपर्यासौकर्यं हरिचरणयोरस्तमयते ॥ १८ ॥**

श्रिय इति । ताः श्रियः संपदो मे क्षणमपि च मा सन्त्विति संबन्धः । एतेनात्मनो-ऽतिविरक्तत्वं ध्वन्यते । यत्किंचित्संपत्तीनां दुःखहेतुत्वेनानाशास्यत्वेऽपि महतीनां तासां सुखहेतुत्वमेव स्यादित्य(त्या)शं(क्य) ता विशिनष्टि माद्यदित्यादि पूर्वार्धशेषेण । माद्यन्तश्च ते गजाश्च तेषां या घटा 'करिणां घटना घटा' इत्यमरात्पङ्क्तिस्तस्यामित्यादि सरलमेव । तत्र हेत्वाशङ्कां शमयंस्तच्छब्दापेक्षितं पूरयति निमग्नानामित्याद्युत्तरार्धेन । यासु निमग्ना-नामत एव द्रविणरसपर्याकुलदृशां धनसुखास्वादव्याकुलविवेकानामित्यर्थः । विपरीतं वा हेतुहेतुमद्भावः । तेन जनकादीनां राज्यानुपपत्तिः प्रत्युक्ता । तेषां तत्रानिमग्नत्वाद्वित्तसु-खालुप्तविवेकत्वाच्च । एतादृशां पुंसां हरिचरणयोः । सपर्येति । 'पूजा सपर्यापचितिः' इत्य-मरात्सपर्या पूजा तस्याः सौकर्यं सुकराया भावः सौकर्यं सुसंपाद्यत्वमित्यर्थः । अस्तमयते-

ऽस्तं प्राप्नोति । दुष्करत्वमेव संपद्यत इत्याशयः । तत्र हेतुगर्भे विशेषणे तु व्याख्याते एव । तस्मादुक्तलक्ष्म्यभावाभिलाषस्तावद्युक्त एवेति भावः । इह काव्यलिङ्गादिरेवालंकारः ॥

अथ गङ्गाप्यस्ति सकलमुक्तिप्रतिबन्धध्वंसनकरा तत्तीरवासिनस्तवेति पुनः स्वचेतः साक्षेपं सान्त्वयति—

**किं निःशङ्कं शेषे शेषे वयसस्त्वमागतो मृत्युः ।**
**अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी जननी ॥ १९ ॥**

किं निःशङ्कमिति । रे चेतः, त्वं वयस आयुषः शेषे किंचिदंशेऽवशिष्टे सतीत्यर्थः । यद्वा । आयुषोऽतीन्द्रियत्वाद्वयःशब्देन वार्धक्यमेव ग्राह्यम् । तथा च तेन तदल्पतानुमानमेव । निःशङ्कं किं शेषे विषयशयनीये निद्रासीत्यन्वयः । तस्मादितः परं द्रुततरमेव सावधानेन भाव्यमिति भावः । तत्र हेतुः 'आगत' इति पूर्वार्धशेषेण । ततोऽकस्माद्गङ्गां स्मृत्वा निरुक्ताक्षेपमेव प्रतिक्षिपति अथवेत्याद्युत्तरार्धेन । शयीथास्त्वं पूर्ववद्धर्मानुरुद्धविषयशय्यायामेव शयनं कुर्वित्यर्थः । तत्र हेतुर्निकट इत्यादि शेषेण । तस्मात्सैव त्वदुद्धारं करिष्यत्येवातः किं तवायासैरित्याशयः । अत्राक्षेपालंकारः । तदुक्तम्—'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् । चन्द्रसंदर्शयात्मानमथवास्ति प्रियामुखम् ॥' इति ॥

ततो जीवननिर्वाहार्थमप्युद्योगवासनां प्रत्याचष्टे—

**संपादयामि किमहं धावं धावं धरातले यदयम् ।**
**अस्ति मम शिरसि सततं नन्दकुमारः प्रभुः परमः ॥ २० ॥**

संपादयामीति । अहं धरातले धावं धावं पुनःपुनर्धावनं विधाय किं संपादयामि किं वाग्रेपि संपादयिष्यामि । सुखादेर्दैवमात्रायत्तत्वाद्व्यर्थ एव तदर्थमायास इत्याशयः । तर्हि दैवस्यापि यत्नसापेक्षत्वात्कथं देहनिर्वाह इत्यत आह यदित्यादिशेषेण । यद्यस्माद्धेतोः । अयं प्रत्यक्षः । एतेन सगुणसाक्षात्कारः सूचितः । सततमित्यादिपदचतुष्टयेन क्रमात्स्वस्य कालान्तरचिन्ताशान्तिः श्रीकृष्णस्य तु भक्तबन्धुत्वसामर्थ्यपरब्रह्मत्वानि च द्योत्यन्ते । 'संतापयामि किमहं धावं धावं धरातले हृदयम्' इति पाठेऽप्ययमेवार्थः फलति । अत्रापि काव्यलिङ्गादिरेवालंकारः ॥

अथ कदाचित्पूर्वसंस्कारतस्तरुण्यासक्तं मनः सोपालम्भं प्रतिबोधयति—

**रे रे मनो मम मनोभवशासनस्य**
**पादाम्बुजद्वयमनारतमामनन्तम् ।**
**किं मां निपातयसि संसृतिगर्तमध्ये**
**नैतावता तव गमिष्यति पुत्रशोकः ॥ २१ ॥**

रे रे मन इति । मम मन इति संबन्धः । त्वम् । मनोभवेति साभिप्रायम् । मनसिज-हन्तुः शिवस्येत्यर्थः । पादेति । चरणाब्जयुगम् । अनारतं संततम् । आमनन्तं वेदतः स्मरन्तम् । एतादृशं माम् । तद्दूरात् । संसृतीति । भवकुहर इत्यर्थः । किं निपातयसी-त्यन्वयः । वैरशुद्ध्यर्थमिति चेत्तत्राह । नेति । एतावता तव पुत्रशोकः स्वसुतीभूतकाम-दाहप्रयुक्तखेद इत्यर्थः । नैव गमिष्यतीति योजना । तस्मात्कान्तासक्तिस्त्याज्यैवेति तत्त्वम् । उक्त एवालंकारः ॥

एवमेकविंशश्लोकान्तं शान्तरसव्यञ्जनेन चतुर्थे पुरुषार्थे समुपदिष्टे सति वक्तव्यांशस्था-नवशिष्टत्वात् 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते शास्त्राणि' इति महाभा-ष्यस्मृतेः समाप्तावपि मङ्गलमभ्युदयकामस्यावश्यकमिति धिया श्रीमहारामायणाभिधादिका-व्यकथैकदेशकथनात्मकत्वेन वस्तुनिर्देशलक्षणं मङ्गलमाचरन्प्रकृतग्रन्थेऽपि विनेयानुशि-शिक्षया संग्रथयति मरकतेत्यादित्रिभिः । तत्राप्यरण्यकाण्डकथैकांशसूचनं द्वाभ्याम् । तृ-तीयेण तु सुन्दरकाण्डस्यैव तस्येति बोध्यम्—

**मरकतमणिमेदिनीधरो वा**
**तरुणतरस्तरुरेष वा तमालः ।**
**रघुपतिमवलोक्य तत्र दूरा-**
**दृषिनिकरैरिति संशयः प्रपेदे ॥ २२ ॥**

तत्र दण्डकारण्ये । दूरादृषिनिकरैर्मुनिसंघैः । रघुपतिं श्रीरामम् । अवलोक्य । अयं दूरप्रत्यक्षः । एतेन संशयसामग्री सूच्यते । मरकतेति । 'गारुत्मतं मरकतमश्य(श्म)गर्भो ह-रिन्मणिः' इत्यमरान्मरकतमणयो हरिर(द्र)त्नानि तन्मयश्चासौ मेदिनीधरः पर्वतश्चेति तथा । एतेन भगवतो रघुनाथस्य 'यं निषेधमुखेनाह नवोढेन पतिं श्रुतिः । तं नामविल-सच्छम्पं रामनीरदमाश्रये ॥' इत्यादिषु नीलवर्णस्यैव वर्णितत्वेऽपि भगवत्यास्तदा तदनुगा-मिन्याः सीतायास्तप्तकाञ्चनसमतनुकान्तिसंपृक्तत्वं व्यज्यते । नीलपीतपीतद्रव्यसंपर्के हि लोके हरिद्वर्णस्य प्रसिद्धत्वात् । ततः किंचिच्चाञ्चल्यं तत्रालक्ष्योत्प्रेक्षान्तरमाहुः । वेति । अथवा । एष पुरोवर्ती तरुणतरोऽतिनूतनपल्लवाढ्यः । एतादृशस्तमाल एतन्नामकः क-श्चित्तापिच्छत्वेन कोशादौ प्रसिद्धो वृक्षविशेष इत्यर्थः । एतादृशस्तरुर्वृक्षोऽस्ति किमिति संशयः संदेहो द्विकोटिको बोधः प्रपेदे प्राप्त इत्यन्वयः । तत्र यदा सीताकान्तिसंपर्कस्त-दाद्यकोटिर्यदा तदभावः पाणिचाञ्चल्यं च तदान्यकोटिरिति तत्त्वम् । अत्र संदेहालंकारः ॥

**तरणितनया किं स्यादेषा न तोयमयी हि सा**
**मरकतमणिज्योत्स्ना वा स्यान्न सा मधुरा कुतः ।**
**इति रघुपतेः कायच्छाया विलोकनकौतुकै-**
**र्वनवसतिभिः कैः कैरादौ न संदिदिहे जनैः ॥२३॥**

तरणीति । वनेति । वननिवासिभिः । कैः कैर्जनैः । रघुपतेः श्रीरामस्य । कायेति । 'छाया सूर्यप्रिया कान्ती' इत्यमराच्छरीरकान्तीक्षणकुतूहलैः सद्भिरित्यर्थः । आदौ प्रथमम् । एषा पुरोवर्तिनी । तरणीति । तरणिः सूर्यस्तस्य तनया कन्या यमुना सात्किम् । नीलवर्णत्वात्तत्र कालिन्दीत्वसंभवेऽपि तोयमयत्वाभावान्नेदमित्याहुर्नेत्यादिना । हिर्हेतौ । यस्मात्सा यमुना तोयमयी । इयं तु न तथेति हेतोः प्रागुक्तकल्पना न नैव संभवतीति संबन्धः । एवमेव कल्पनान्तरं कृत्वापि निराचक्रुरित्याह—मरकतेत्यादिद्वितीयपादेन । 'ज्योत्स्ना सचन्द्रनक्षत्ररात्रौ चन्द्रातपेऽपि च' इति विश्वान्मरकतमणिकृता हरिद्रत्ननिर्मिता ज्योत्स्ना सचन्द्रनक्षत्ररात्रिस्तत्सदृशी । श्रीरामकान्तेः सीताकान्तिसंपृक्तत्वेन हरिद्वर्णत्वेऽपि तत्राकाशनैल्यस्य जलादाविव प्रतिफलनाद्रात्रिसाधर्म्येण तथा सूर्यस्य प्रतिफलनात्तन्नीलिमादिना सचन्द्रत्वेन तथा तदलंकारहीरप्रतिबिम्बनात्सनक्षत्रत्वेन काचिद्विचित्रा दीप्तिरिति भ्रान्तिः सुघटैवेति भावः । अत्र श्रीरामकान्तौ तु चकोराणां चन्द्रकान्ताविव तेषां माधुर्यास्वादे जायमाने पुनर्निरुक्तकल्पनामपि प्रत्याचख्युरित्याह नेत्यादिना । नोक्तकान्तिकल्पना नैव संभवति । तत्र हेतुः । सा निरुक्तमरकतकान्तिः । कुत इत्याक्षेपे । कस्मान्मधुरा । न कुतोऽपि तथेत्यर्थः । इति न संदिदिहे । अपि तु सर्वैरपि संदिदिह एवेति योजना । एवं च द्वाभ्यामपि पद्याभ्यां तत्कान्तावलौकिकत्वं ध्वन्यते । अत्र सहेतुकसंदेहालंकारः ॥

**चपला जलदच्च्युता लता वा**
**तरुमुख्यादिति संशये निमग्नः ।**
**गुरुनिःश्वसितैः कपिर्मनीषी**
**निरणैषीदथ तां वियोगिनीति ॥ २४ ॥**

चपलेति । इयं जलदच्च्युता मेघात्पतिता चपला विद्युदेव । यद्वा तरुमुख्यात्कल्पद्रुमाच्च्युता लता कल्पवल्ली वास्तीति संशये निमग्नः कपिर्हनुमान्मनीषी विद्वानत एव अथ निरुक्तसंशयोत्तरं तां सीतां वियोगिनी विरहिणी इति गुरुनिःश्वसितैरशोकवनिकायां दीर्घनिःश्वासैर्लिङ्गैर्निरणैषीन्निर्णीतवानिति योजना । अत्रापि ससंदेहोत्तरपरिकरश्च । अत्र 'कविर्मनीषी' इत्यपि केचित्पठन्त्यथाप्युक्तनिर्णयसामग्र्या मनीषिपदेनैव संपन्नत्वात्संशयस्य तु तद्गौरत्वादिनैव सिद्धेः कवित्वमनर्थकमेवेति ध्येयम् । निर्णयालंकारः ॥

अथास्य ग्रन्थस्य प्रचारप्रतिबन्धकानि नीचगृहसंपत्तिर्विप्रगृहविपत्तिः साधुक्षिप्रमृतिरसाधुरा(ध्वा)युर्वृद्धिश्चेतिश्चेति चत्वार्येवातः सांप्रतिकत्वेन तत्प्रयोजकमीश्वरमेव कविरुपालभते—

**भूतिर्नीचगृहेषु विप्रसदने दारिद्र्यकोलाहलो**
**नाशो हन्त सतामसत्पथजुषामायुः शतानां शतम् ।**

**दुर्नीतिं तव वीक्ष्य कोपदहनज्वालाजटालोऽपि स-**
**न्किं कुर्वे जगदीश यत्पुनरहं दीनो भवानीश्वरः ॥ २५ ॥**

भूतिरिति । नीचगृहेषु म्लेच्छाद्यधमतमसद्मस्वित्यर्थः । भूतिरैश्वर्यसंपत्तिः । तथा वि-प्रसदने ब्राह्मणानां गृहे दारिद्र्यकोलाहलो दारिद्र्येणान्नाच्छादनादेरपि शून्यत्वेन यः कोला-हलो बालानां रोदनादि । कलकलशब्द इत्यर्थः । 'कोलाहलः कलकलः' इत्यमरः । हन्तेति खेदे । सतां साधूनां नाशः शीघ्रमेव मृत्युः । अल्पायुष्ट्वमिति यावत् । एवमसत्पथजुषां कुमार्गगामिनाम् । शतानां शतम् । असंख्यातमित्यर्थः । अतिशयोक्तिरियम् । यद्वा 'समानाम्' इत्वे(त्ये)व पाठः । तथा च 'हायनोऽस्त्री शरत्समाः' इत्यमराद्वर्षाणामित्यर्थः । 'शतं शतायुर्वै पुरुषः' इति श्रुतेस्तेषां पूर्णायुष्ट्वमिति यावत् । हे जगदीश परमेश्वर, एवं विश्वनियन्तुस्तव दुर्नीतिं वीक्ष्याहम् । कोपेति । क्रोधानलज्वालाजटालोऽपि सन्नहं किं कुर्वे । न किमपि करोमीत्यर्थः । कुत इति चेत्तत्राह—यदित्यादिशेषेण । यद्यस्मात्कारणादहं दीनोऽस्मि । भ-वान्पुनरीश्वरोऽतिसमर्थोऽस्तीति संबन्धः । तस्मात्त्वयेदं चतुष्टयं नैव विधेयं तथा च मद्ग्र-न्थप्रथावश्यमेव भविष्यतीति भावः । अत्र जगदीशेश्वरपदाभ्यां द्विरुक्तिस्तु वक्तुः कवे-रतिरभसपारवश्येनानवधानादेवेति ध्येयम् । एवं चात्र नीतिवीरो रसः । काव्यलिङ्गादिरे-वालंकारः ॥

ननु त्वं किमित्येवमीश्वरमाक्षिपसि तत्तज्जीवादृष्टानुसारत एव तस्य फलदत्वात्तथा च यदि त्वत्काव्यस्याप्रसिद्धिरेव स्याच्चेत्किं ततः सन्त्येव मानुषकविष्वपि कालिदासादीनां रघु-वंशादीनि काव्यानि ततस्तैरेव तदधिकारिणां कान्तोपदेशरीत्या धर्मादिपुमर्थतत्साधन-ध्वननं च भूयादिति चेत्तत्राह—आमूलादित्यादिसप्तभिरासमाप्ति ।

**आ मूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-**
**र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।**
**मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां**
**वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः २६**

रत्नसानोर्मेरोः । 'रत्नसानुः सुरालयः' इत्यमरः । मूलादा । मर्यादार्थकोऽयमाङ् । मेरुमूलं मर्यादीकृत्येत्यर्थः । तथा मलयेति । मलयाचलवेष्टितादित्यर्थः । एतादृशात्पयोधेः क्षाराब्धेः कूलात्तीरात् आ । तीरं मर्यादीकृत्येति यावत् । एवं च सेतुसुरालयमध्यदेश इति फलितम् । काव्येति । काव्यरचनचतुरा इत्यर्थः । 'दक्षे तु चतुरपेशलपटवः' इत्य-मरः । वदन्त्विति पदमितिशब्दाध्याहारेण कोऽस्ति धन्यो मदन्य इति वदन्त्विति यो-जना । मृद्वीकेति । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । तस्या अपि मध्यस्तस्मादपि निर्यंस्तत्परिपाकात्स्वयमेवाविर्भवन् । न तु निष्काशितः । अत एव यो मसृणरसो माधु-र्याधिक्येन कोमलरसस्तस्यापि या झरी सूक्ष्मः प्रवाहस्तस्य या माधुरी तस्या यद्भाग्यमै-

श्वर्यं तद्भजन्ति सेवन्ते तास्तथा। एतादृशीनां वाचां काव्यवाणीनाम्। आचार्यताया गुरुतायाः पदं स्थानम्। [अनुभवितुं] विशदयेव (?)। तथा चाहमेवोक्तपदानुभवनधन्य इति ध्वन्यते। तस्मात्के मदग्रे कालिदासादय इत्याशयः। एवं च युक्त्यैवोक्तेश्वरप्रार्थनेति रहस्यम्। अत्र कवित्ववीर एव रसः। रूपकं लुप्तोपमा वा(चा)लंकारः॥

एवं तर्हि भवद्वाच्यपि केचिदेव किमिति सादराः, कुतो वा न सर्वेऽपीत्याक्षिप्ते, किमेतावता क्षतं प्रत्युत यावन्मनुष्येषु पशुतत्पतित्वयोर्निर्णायकं श्रावणद्वारा मत्काव्यमेव संपन्नम्, तदन्यतरनिर्णयसंदेहस्तु सहवासेनैव पराकरणीय इत्याशयेनोत्तरयति—

**गिरां देवी वीणागुणरणनहीनादरकरा**
**यदीयानां वाचाममृतमयमाचामति रसम्।**
**वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-**
**रधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः॥ २७॥**

गिरां देवीति। वागधिष्ठात्री भगवती। सरस्वत्यपीत्यर्थः। एतेन निरुपमशक्तिमत्त्वं स्वस्य सूच्यते। वीणेति। वीणायाः कच्छप्यभिधाया वल्लक्या ये गुणास्तन्त्र्यभिधानि सूक्ष्मसूत्राणि तेषां यद्रणनं वादनं तत्र हीनादर आसक्तिशून्यः करो हस्तो यस्याः सा तथा। एतादृशी सतीत्यर्थः। एकक्षणावच्छेदेन हि ज्ञानकर्मेन्द्रियाभ्यां केवलाभ्यां वा ता (?) केनचित्कुशलेन तत्तत्साध्ये साध्यमानेऽप्यन्यतरस्य हीनतावश्यंभाव एव। एवं च प्रकृते वक्ष्यमाणकाव्याकर्णनतस्तद्रसास्वादने करसंचारणेन वीणावादने किंचिन्न्यूनतापत्तिः। अतः संपूर्णतया तदास्वादनार्थं लुब्धचेतस्त्वेन तस्याः करस्य स्वयमेव तत्रानादरः संपन्न इति ध्वन्यते। तेन प्रकृतकाव्यस्यालौकिकत्वं द्योत्यते। यदीयानां यत्संबन्धिनीनां वाचां प्रकृतादिकाव्यवाणीनाम्। अमृतमयं पीयूषरूपं रसं शृङ्गारादिरसम्। आचामत्यास्वादयतीति संबन्धः। तस्य पण्डितपतेः। एतेन स्वस्य सकलशास्त्रपाटवमपि द्योतितम्। वचः काव्यवाक्यं न तु तर्कव्याकरणादि कर्णकर्कशवाक्यम्। तत्र फलविशेषसत्त्वेऽपि सद्यः श्रवणादिसंतोषाजनकत्वात्। आकर्ण्य श्रुत्वा। यो मूर्धानम्। महारम्यतममिदमिति संतोषेण शिरःकम्पनं हि लोके तत्सूचकचेष्टात्वेन सुप्रसिद्धमेव। तदभावादधुन्वन्नकम्पयन्भवति। नृपशुरेव नराकारः पशुरेवेह बोध्य इत्यर्थः। ननु सुभाषितश्रवणतो जीवन्मुक्तानामपि परितोषाभावस्य समुद्रे वृष्ट्या जलवृद्ध्यभावस्येव लोकादावलोकितत्वात्कथमेतादृशस्य भवता पशुत्वमेवाध्यवसीयत इत्याशङ्क्य, न मयैवं निर्णीयते किंतु संदिह्यत एवेति कोट्यन्तरकथनतो व्यनक्ति—अथवेत्यादिशेषेण। अयं पृथिव्याद्यष्टमूर्तिरूपत्वेन प्रत्यक्षः पशुपतिः श्रीशंकर एव स इति योजना। तथा चाम्नायते—'ब्रह्मविद्ब्रह्मैव भवति' इति। उक्तं चान्यत्रापि सुभाषिताद्यनानन्दिनः पशुत्वादि—'सुभाषितेन गीतेन युवतीनां च लीलया। यस्य नो द्रवते चित्तं स वै मुक्तोऽथ वा पशुः॥' इति। यथाश्रुते तु प्रकृतकवेः सर्वज्ञत्वाभावात्प्रत्यक्षविषयवाचीदंशब्दप्रयोगानापत्तिः। एवं श्रवणेति वचोविशेषणस्य पूर्वार्धेन सहार्थिकाद्विरुक्त्या-

पत्तिरपि । प्रकृतकेर्वगङ्गाप्रसादप्रसिद्धेः (?) पशुपतिस्वरूपपृथिव्याद्यष्टमूर्तिप्रमासंभवेन तद्विषयकप्रत्यक्षवाचीदंपदप्रयोगादोषात्सरस्वतीसान्निध्यभावेऽपि तस्याः सर्वज्ञत्वेन स्वकाव्यरसं सा मनसैवास्वादयतीत्यवश्यवक्तव्यं तथा चात्रार्थिकसाद्गुण्येऽपि श्रुतिकटुप्रभृतिशाब्दिकदोषसत्वेनाश्रव्यत्वव्युदसनौपयिकतयैवोक्तविशेषणसार्थकत्वात्परा कार्येति दिक् । अत्राप्युक्त एव रसः । अतिशयोक्तिः संदेहः । काव्यलिङ्गं परिकरः । परिकराङ्कुरो लुप्तोपमादिश्चालंकारः ॥

भवत्वेवं यस्त्वद्वाग्रसमनास्वादयति तस्य पशुत्वादिकल्पनमथापि यस्तु तद्रसं ज्ञात्वापि मत्सरवशादेव शिरःकम्पादिकायिकादिव्यापारैर्नैव तां स्वप्नेऽपि बहु मन्यते तस्य किं वन्द्यकोटौ निन्द्यकोटौ वा त्वया निवेशः क्रियत इति चेन्न, उपेक्षाख्यतृतीयकोटावेव मम तन्निवेशस्य विवक्षितत्वादित्यभिसंधाय कवित्ववीररसाविष्टचेतस्तया कविस्तावन्मूर्तिमतीम् 'निर्दूषणां गुणवतीं सरसां सुवर्णां सालंकृतिं ध्वनिमतीं शुभलक्षणां च । सद्वृत्तिरीतिमृदुमञ्जुपदामुदारां श्रृङ्गारभावललितां गतबालभावाम् ॥ हृद्येव भूरि कठिनां वदने प्रसन्नामन्यत्र चारुमसृणां दृशि कृष्णसाराम् । मर्यादयातिविनतां विशदाशयाढ्यां साध्वीमुपैति सुकृती तरुणीं च वाणीम् ॥' इत्यादि मदुक्तप्रकारेणाग्रतः स्थितामिव प्रकृतमत्सरिकृतानादरखिन्नामिव च स्ववाचं प्रकल्प्य तां सान्त्वयति—

**मद्वाणि मा कुरु विषादमनादरेण**
**मात्सर्यमग्नमनसां सहसा खलानाम् ।**
**काव्यारविन्दमकरन्दमधुव्रताना-**
**मास्येषु धास्यसितमां कति नो विलासान् ॥२८॥**

मद्वाणीति । हे मद्वाणि, मदीयभारति । त्वम् । मात्सर्येति । असूयापरनामा परोत्कर्षासहनजन्मा तत्प्रातिकूल्यप्रवीणो मनोविकारो मत्सरः । तत्र सूर्योत्कर्षासहनजन्मनि दिवाभीतनिलीनत्वादावतिव्याप्तिरिति तदादिप्रवीणान्तम् । तत्रापि शिशुपालकर्तृकश्रीकृष्णनिन्दारूपे वाग्व्यापारेऽतिप्रसङ्ग इति मनोविकार इति । तस्य भावो मात्सर्यम् । तत्र मग्नं न तु गतम् । तेन पङ्कादौ मग्नवत्तस्य दुरुद्धरत्वं ध्वन्यते । एतादृशं मनो येषां तथा तेषामित्यर्थः । एतेन तत्रोपेक्षैकप्रतीकार्यत्वं व्यज्यते । एतादृशां खलानाम् । पिशुनानामित्यर्थः । अनादरेण कर्तरि षष्ठी सा तत्कर्तृकतिरस्कारेणेत्यर्थः । सहसा स्त्रीस्वाभाव्याद्राभसेनेति यावत् । विषादं खेदम् । मा कुरु मैव भजस्वेति योजना । अहो कथं मया न खेदः कार्यः, प्रागुक्तसकलगुणशालिन्या अपि मे पामरैरप्येतैस्तिरस्कारः केवलं कमप्यपराधं विनैव कृष्णाया इव कौरवैः क्रियत इत्यत आह—काव्येत्याद्युत्तरार्धेन । काव्यानि श्रीमहारामायणादीन्येव । अरविन्दानि पद्मानि । तेन तेषां प्रसन्नत्वसरसत्वमृदुलत्वादीनी(नि) द्योत्यन्ते । तेषां यो मकरन्दः पुष्परस इव श्रृङ्गारादिरसस्तत्र ये मधुव्रता इव भ्रमरा इव संसक्तत्वतदास्वादकत्वादिना मधुव्रताः सहृदयास्तेषामित्यर्थः । अत्र रसमधुव्रतपदाभ्यां

शृङ्गारादावास्वाद्यत्वतदुत्पत्तिजनकत्वादि सहृदयेषु तन्मात्रनिरतत्वादि च सूच्यते । तथा चै-तादृशां पुरुषधौरेयाणाम् । आस्येषु मुखेषु । कति विलासान्नो धास्यसि । अपि तु बहूनपि विलासान्धास्यस्येवेत्यन्वयः । अत्र 'धास्यसितमां कियतो विलासान्' इत्यपि केचित्पठन्ति तत्र काक्काश्रया(य)णमेवोक्तार्थपोषार्थं दोष इति ध्येयम् । तस्मान्नैव भवत्या खेदः कार्य इति तात्पर्यम् । अत्रोक्त एव रसः । समासोक्तिः काव्यलिङ्गं लुप्तोपमादिश्चालंकारः ॥

न केवलमसौ मत्काव्यश्रवणानानन्दी पशुरेव किंतु ततोऽपि नीच इति सूचयति—

**मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा**
**कदाचित्केषांचिन्न खलु विदधीरन्नपि मुदम् ।**
**ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो**
**न येषामानन्दं जनयति जगन्नाथभणितिः ॥ २९ ॥**

मधु द्राक्षेति । मधु माक्षिकमेव द्राक्षा । साहचर्यान्मधुरद्रव्यस्यैव प्रकृते सर्वस्य कवि-विवक्षितत्वाच्च । सुराद्रव्यस्य तु क्वापि तथात्वेनानुक्तत्वात्प्रत्युत दुर्गन्धत्वादिना दूरतो-ऽप्यतितरपराकरणीयत्वादनन्तकोटिशास्त्रनिन्दितत्वाच्च नात्र भ्रान्त्यापि प्रसङ्गः । तद्द्राक्षा मृद्वीकादिः प्रसिद्धैव । एतद्द्वयं त्वाबालसाधारणम् । अमृते तु तेषामश्रुतत्वेन कामाभावात् । साक्षात्प्रत्यक्षम् । तेन 'अमृतं यज्ञशेषे स्यात्' इति विश्वोक्तगौणामृतव्यावृत्तिः । अ-मृतं पीयूषम् । इदं तु बालेतरसाधारणम् । तेन विशेषालम्भार्थोऽयमथशब्दः । वामाधरसुधा । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वात्स्त्रीत्वविवक्षायां टापि कृते वामेति रूपम् । तेन परमसुन्दरीत्यर्थः । तस्या याधरसुधा । अधरामृतमिति यावत् । इदं हि बालानां तत्प्रयोजकाविर्भावाभावेनाविशेषयत्, वृद्धानां तत्सत्त्वेऽपि तदुपोद्बलकशक्तिवि-शेषशून्यत्वेन 'वृद्धस्य तरुणी विषम्' इति वचनेन चाविषयत्वात्तरुणैकविषयं ज्ञेयम् । अथ-वेति पदच्छेदे तु माशब्देन लक्ष्मीः । शिष्टं तु प्राग्वदेव । अत्राधरसुधेति पदे रूपकलुप्तोप-माद्यलंकारविवक्ष(क्षा)यामपि श्लेषादिवशात्सुधापदेन चूर्णोपस्थितिदोषस्त्वधरे लग्ना ताम्बू-लभक्षणक्षणावच्छेदेन संबद्धा या सुधा चूर्णमिति शाकपार्थिवादिसमासं तस्मिन्पक्षे समा-श्रित्य यावत्स्त्रीगुणविशिष्टस्वरमण्याः कमलाया वाधरसंपर्केण चूर्णस्याप्यमृताधिकमधुरिमा-संपन्न इति शृङ्गारातिशयध्वनेः समवमोषणीय इति तत्वम् । एवं च जीवन्मुक्तानां विष्णुसा-योज्यं संपाद्य तत्प्राशनकामनाव्यतिरेकस्यापि संभवाद्युक्तमेव तद्ग्रहणम् । सर्वासामप्यतिसुन्द-रीणां तन्मात्रावधित्वात् । एते पदार्थाश्चत्वारोऽपि प्रत्येकं वा । कदाचिद्देशे काले वा । न तु सर्वदा । तत्रापि केषांचिज्जीवन्मुक्ताद्यधिकारिविशेषाणामेव । मुदं हर्षं यद्यपि न खलु विदधीरन्नैव कुर्वीरन्नित्यर्थः । तथापि न क्षतिरित्यार्थिकम् । तत्र मधुद्राक्षे पित्तोपहतरसनस्य सर्वस्य, अमृतवामाधरसुधे तु मिलिते चेज्जीवन्मुक्तानामेव, केवलवामाधारसुधा तु तादृ-शवृद्धस्यैवानादरविषय इति विभागो बोध्यः । अस्त्वेवम्, प्रकृते किमागतमित्यतस्तद्व्यनक्ति—ध्रुवमित्याद्युत्तरार्धेन । अहहेति खेदे । ते मन्दमतयो जीवन्तोऽपि मृतका ध्रुवं मृता एव सन्तीति

संबन्धः। ते के। येषां जगन्नाथभणितिर्जगन्नाथशर्मणः पण्डितरायस्य मम भणितिः। काव्यात्मकशब्दरचनेत्यर्थः। आनन्दं न जनयतीति योजना। यथा जीवन्मुक्तत्वं जीवेषु परमोत्तमकोटिरेवं जीवन्मृतत्वमपि चरमाधमकोटिरित्याशयः। तस्मान्मत्काव्यानादरशीलास्तु पश्वादिभ्योऽप्यतिनिन्द्या एवेति भावः। एवं चैतादृशोत्तमोत्तमकाव्यप्रचारार्थमुक्तेश्वरोपालम्भः संभवदुक्तिक एवेति व्यज्यते। अत्रापि कवित्ववीर एव रसः। अतिशयोक्तिः प्रतीपं लुप्तोपमा काव्यलिङ्गं परिकरस्तैर्मिलित्वा क्षीरनीरवत्संकरश्चालंकारः॥

अथ कवित्ववीररसावेशादेव कंचित्स्वप्रतिस्पर्धिनं पुरःस्थितं मया त्वदपेक्षयाप्यतिरमणीयतमं काव्यं क्रियत इति वदन्तमिव प्रकल्प्य तं प्रत्याचष्टे—

**निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रव-**
**न्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम्।**
**काव्यं तर्हि सखे सुखेन कथय त्वं संमुखे मादृशां**
**नो चेद्दुष्कृतमात्मना कृतमिव स्वान्ताद्बहिर्मा कृथाः॥३०**

निर्माण इति। हे सखे। एतेन स्वस्य प्रतिमल्लेऽपि सौहार्दप्रकाशकत्वेनातिप्रौढत्वं व्यज्यते। त्वं यदि गिरां काव्यवाणीनां निर्माणे रचने नितरामत्यन्तम्। न तु यत्किंचित्। तत्रापि मार्मिकोऽसि तद्रतनचातुरीमर्मज्ञोऽसीत्यर्थः। तर्हि मादृशां संमुखे मत्समक्षं पण्डितधुरंधराणां समक्षमित्यर्थः। सुखेन काव्यं कथयेत्यन्वयः। एतेन स्वाग्रे काव्यप्रकाशनमलौकिकशक्तिमन्तरानुचितमेवेति द्योत्यते। ननु किमत्रालौकिकशक्त्या कविता हि शास्त्रव्युत्पत्तिमात्रसाध्येति तदाशयमनुमाय निरुक्तगिरो विशिनष्टि—अत्यन्तेति। अत्यन्तं स्वयमुन्मीलनपर्यन्तं न तु यत्किंचित्। एतादृशो यः पाकः पक्वता ततो द्रवन्ती निरुक्तोद्भेदेन रसमुद्गिरन्ती। एतादृशी या 'मृद्वीका गोस्तनी द्राक्षा' इत्यमराद्द्राक्षाजातिविशेषो गोस्तनाकार एव तस्या यो मधुमाधुरीमदो मधु माक्षिकं मकरन्दो वा तद्वद्या माधुरी मधुरता तया यो मदः। गर्व इति यावत्। तस्य यः परीहारः परीभावस्तत्रोद्धुरा अग्रेसरास्तासामित्यर्थः। एतेनालौकिकानन्तजन्मसंचितसुकृतपरिपाकैकजन्यतादृशकवित्वप्रयोजकबीजीभूतशक्तिविशेषमन्तरा निरुक्तरीतिककाव्यकल्पनं नैवाल्पायाससाध्यमिति ध्वन्यते। उक्तवैपरीत्ये त्वतितूष्णींभाव एव त्वया विधेय इत्युपदेशव्याजेन विनिन्दति—नो चेदित्यादि चरमचरणेन। नो चेन्निरुक्तसामर्थ्यं नास्ति चेत्तर्हि त्वमात्मना बुद्ध्या कृतं न त्वज्ञानात्संपन्नम्। एतेन व्यवहारे तस्य मौर्ख्यापादकत्वेनातिगोप्यत्ववद्भावत्ककाव्येऽपि तत्त्वमेव त्वयावश्यं कर्तव्यमिति द्योत्यते। एतादृशं दुष्कृतं पापमिव। आत्मना त्वया कृतं काव्यमपि स्वान्तादन्तःकरणात् बहिर्वाग्द्वारा प्रकटं मा कृथा नैव कुर्वित्यन्वयः। एतस्मादेतादृक्सामर्थ्यमिदानीं मय्येव नान्यत्रेत्याकूतम्। अत्रोक्त एव रसः। प्रतीपोपमेऽलंकारौ॥

तदेव स्पष्टयति—

**धुर्यैरपि माधुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकसुधानाम् ।**
**वन्द्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥ ३१ ॥**

धुर्यैरपीति । 'धुर्वहे धुर्यधौरेयधुरीणास्तु धुरंधराः' इत्यमराच्छ्रेष्ठैरपीत्यर्थः । एतादृशैरपि । द्राक्षेति सुधामृतम् । माधुर्यैः । पण्डितेति । कविताया इयं प्रत्यक्षप्रकृतग्रन्थगा माधुरी मधुरता वन्द्यैवास्तीति संबन्धः । रसस्त्वत्रोक्त एव । प्रतीपमलंकारः ॥

तर्हीदं मुक्तककाव्यमेव किमिति रघुवंशादिवद्ग्रामादिवर्णनमेव न कृतमित्याक्षेपं समाधत्ते—

**दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया ।**
**मदीयपद्यरत्नानां मञ्जूषैषा कृता मया ॥ ३२ ॥**

## इति पण्डितराजश्रीजगन्नाथविरचिते भामिनीविलासे शान्तविलासश्चतुर्थः ।

दुर्वृत्ता इति । मञ्जूषा पेटिका । एवं च मयायं ग्रन्थः काव्यग्रथनबुद्ध्या नैव कृतः । किंतु तत्तदवसरे लीलामात्रेण तानि तानि पद्यानि कृतानि । तेषां केचिद्दुर्जनास्तावन्मदीयोऽयं श्लोको मदीयोऽयं श्लोक इति विद्वत्सदःसु श्लाघनेनापहारं करिष्यन्तीति तन्निराकरणार्थमेवेति द्योत्यते । अत्राप्युक्त एव रसः । लुप्तोपमा रूपकं चालंकारः ॥

दोषं करोमि कण्ठे गुणाय किल भामिनीविलास इह ।
तेनैव सार्थको मे भूयात्प्रणयप्रकाशोऽयम् ॥
पदवाक्यमानविरहोऽप्युपयोगायैव मेऽत्र संपन्नः ।
यद्भामिनीविलासे रचितप्रणयप्रकाशोऽयम् ॥
तमिमं वयस्य सुदृशः पश्यन्त्वनिशं ममात्र यो दोषः ।
तमपि च सुवेषयन्तु स्वात्मसु तस्यै यतोऽयमारचितः ॥

## इति प्रणयप्रकाशे चतुर्थः प्रमोदः ।

# भामिनीविलासस्थश्लोकानां सूची ।

| | किं. | ट. ख. |
|---|---|---|
| वृत्तरत्नाकर—केदारभट्टकृत, नारायणपण्डितकृत टीकेसहित, श्रुतबोध-कालिदासकृत, व छन्दोमञ्जरी-गङ्गादासकृत ... | ·।।।· | )- |
| वैदिककोश—भट्टभास्करकृत, निघंटु व चार परिशिष्टें यांसहित | ·।।· | )- |
| वैराग्यशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित | ·।·।। | )॥ |
| शब्दरूपावली ... ... | )- | )॥ |
| शिवसहस्रनामावली (साधी) ... | )-॥ | )॥ |
| ,, (रेशमी पुट्ठा) | )≡ | )॥ |
| शिवकवच ... ... | )।।। | )॥ |
| शिवगीता (साधी) | ·।·। | )- |
| ,, (रेश० पु०) | ·।=। | )- |
| ,, लक्ष्मीनरहरिसूनुकृत बालानंदिनी टीका और शंकराचार्यकृत कालभैरवाष्टक यांसहित ... | १ | )= |
| शिवतांडवस्तोत्र—दशकंठकृत, माधवानंदकृत टीकेसहित ... | )- | )॥ |
| शिवमहिम्नस्तोत्र—पुष्पदंतकृत ... ... | )।।। | )॥ |
| शिवापराधक्षमापनस्तोत्र—शंकराचार्यकृत ... | )॥ | )॥ |
| शिशुपालवध काव्य—माघकृत, मल्लिनाथकृत सर्वंकषाटीकेसहित ... ... ... | २ | ·।· |
| शृङ्गारशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित | )≡॥ | )॥ |
| सत्यनारायणपूजा व कथा ... ... ... | )- | )॥ |

| | किं. | ट. ख. |
|---|---|---|
| सप्तशती (चंडीपाठ), देवीसूक्त व तीन रहस्य यांसहित (स्थूलाक्षर रेशमी पुट्ठा) | ·।।।· | )=॥ |
| सप्तशती (रे. पु. म. अ.) | ·।= | )- |
| ,, (साधी कागदी) | ·।· | )- |
| (सूक्ष्माक्षर रे. पु.) | ·।- | )॥ |
| ,, (स्थूलाक्षर खुला पत्रा) | ·।।= | )= |
| समासचक्र ... ... | )।।। | )॥ |
| सर्वपूजा ... ... ... | )- | )॥ |
| सिद्धांतकौमुदी-भट्टोजी दीक्षितकृत, अष्टाध्यायीसूत्रपाठ, गणपाठ, धातुपाठ, लिंगानुशासन, शिक्षा आणि सूत्रानुक्रमणी यांसहित | २ | ·।· |
| सुभाषितरत्नभांडागार | ३॥ | ·।= |
| सूर्यसहस्रनामावली ... | )-॥ | )॥ |
| ,, (रे. पुट्ठा) | )≡ | )॥ |
| स्वानुभवाष्टक—गोपीनाथ दाधीचकृत, स्वकृतसारबोधिनीटीकासहित ... ... | )- | )॥ |
| हर्षचरित—बाणभट्टकृत, शंकरकृत संकेतटीकेसहित ... ... | २ | )= |
| हितोपदेश—नारायणपंडितकृत ... ... | ·।।· | )- |
| ,, (इंग्रजी टिपांसहित) | १ | )-॥ |
| अभिधानसंग्रह—प्रथम भाग. यांत अमरसिंहकृत नामलिंगानुशासन, पुरुषोत्तमदेवकृत त्रिकांडशेष, हारावली, एकाक्षरकोश व द्विरूपकोश इतके कोश आले आहेत. ... ... | १ | )- |

## काव्यमाला.

या नांवाचें संस्कृत मासिक पुस्तक, सन १८८६ चे जान्युआरी महिन्यापासून प्रसिद्ध होत आहे. यांत उत्तम उत्तम प्राचीन संस्कृत काव्यें, नाटकें, चंपु, भाण, प्रहसनें, छंद, अलंकार इत्यादिकांचा यथावकाश संग्रह होत असतो. फार प्राचीन आणि अत्यंत सुरस असेच ग्रंथ निवडून ते या मालेंत गुंफले जातात. **महामहोपाध्याय पंडित दुर्गाप्रसाद** या नांवाचे विद्वान्, बहुश्रुत आणि शोधक गृहस्थ जयपूरच्या महाराजांचे आश्रयास होते. त्यांनीं काश्मीर, पंजाब, बंगाला, राजपुताना, मध्यदेश, तैलंगण, वगैरे सर्व प्रदेश फिरून नानाप्रकारचे काव्यग्रंथ संपादित केले होते. त्यांतील कित्येक ग्रंथ तर ८०० किंबहुना १००० वर्षांच्याही पूर्वींचे होते. ते सर्व ग्रंथ **रा०रा० काशिनाथ पांडुरंग परब** यांनीं आह्मांस तपासून दिलेले या मालेंत येत जातात. या मालेचे अंक प्रतिमासास एकदां प्रसिद्ध होतात. प्रत्येक अंकांत डेमी अष्टपत्री सांच्याचीं १०० पृष्ठें असतात. याची वर्षाची आगाऊ ६ रुपये, ट. ख. ॥। फुटकळ ...ाची किंमत ॥= ट. ख. ८

यांत आजपर्यंत ग्रंथ छापून तयार झाले आहेत, त्यांचीं नांवें:—

**प्रथम गुच्छक**—यांत (१) राघवचतन्यविरचित महागणपतिस्तोत्र (सटीक,) (२) लङ्केश्वरविरचित शिवस्तुति, (३) कालिदासकृत श्यामलादण्डक, (४) कुलशेखरनृपतिविरचित मुकुन्दमाला, (५) जगन्नाथपण्डितराजविरचित सुधालहरी, (६) [illegible] (७) क्षेमेन्द्रविरचित कलाविलास, (८) जगन्नाथपण्डितराजविरचित प्राणाभरण (सटीक), (९) अप्पयदीक्षितविरचित वैराग्यशतक, (१०) जगन्नाथपण्डितराजविरचित अमृतलहरी, (११) रत्नाकरविरचित वक्रोक्तिपञ्चाशिका (सटीक), (१२) आणि क्षेमेन्द्रविरचित औचित्यविचारचर्चा, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८॥

**द्वितीय गुच्छक**—यांत (१) शंकराचार्यकृत विष्णुपादादिकेशान्तवर्णनस्तोत्र (सटीक), (२) गुमानिकविप्रणीत उपदेशशतक, (३) क्षेमेन्द्रकृत सुवृत्ततिलक, (४) जगन्नाथपण्डितराजविरचित करुणालहरी, (५) शंभुमहाकविविरचित अन्योक्तिमुक्तालता, (६) क्षेमेन्द्रकृत सेव्यसेवकोपदेश, (७) विक्रमविरचित नेमिदूत (८) जगन्नाथपण्डितराजविरचित लक्ष्मीलहरी, (९) रुद्रकविकृत भावविलास, (१०) क्षेमेन्द्रकृत चारुचर्या, (११) मधुसूदनसरस्वतीविरचित आनन्दमन्दाकिनी, (१२) शंकराचार्यकृत अम्बाष्टक (सटीक) आणि (१३) मुकुन्दमुक्तावलि, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८॥

**तृतीय गुच्छक**—यांत (१) गोकुलनाथविरचित शिवशतक, (२) पञ्चस्तवी, (३) दामोदरगुप्तप्रणीत कुट्टनीमत, (४) रुद्रभट्टकृत श्रृङ्गारतिलक और (५) माधवविरचित दानलीलाकाव्य, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८॥

**चतुर्थ गुच्छक**—यांत (१) बाणभट्टविरचित चण्डीशतक (सटिप्पण), (२) नागराजप्रणीत भावशतक, (३) नारायणभट्टपादकृत स्वाहासुधाकर,